जि॰ मु॰ पू॰

३६९ ज्येष्ठानुराधके चैव भरणी स्वाति पूर्वभे धनिष्ठास्वपि नक्षत्रेषु शनिस्तिष्ठेद्दिनेऽस्य च ३७० क्षपणो नाम नः सोक्तो धनधान्यादिके गृहे
पुत्रे जातेऽथवा तस्मिन् गृहानेयक्षराक्षसैः ३७१ प्रासादेष्वेवमेवं स्याद्वापीकूपेषु दैववित् तस्माद्विचार्य कुर्वीत गृहारंभं शुभे स्फुना ३
७२ नाष्टन्दिशं निमकरालिकुलीरलग्ने मेषे घटे धनुषि कर्मसु दीर्घसत्रम् कन्याझषे मिथुनगे ध्रुवमर्थलाभं ज्योतिर्विदः कल
शसिंहवृषेषु सिद्धिं ३७३ मध्याह्ने तु कृतं स्वात्सुकर्तुर्वित्तविनाशदं महानिशास्वपि तथा सन्ध्ययोर्नैव कारयेत् ३७४॥ अथ भाव
फलानि॥ लग्ने केंके वज्रपातः स्यात्कोशहानिश्च शीतगौ मृत्युर्विश्वम्भरापुत्रे दारिद्र्यं रविनन्दने ३७५ जीवे धर्मार्थकामाः स्युः
पुत्रोत्पत्तिश्च भार्गवे चन्द्रजे कुशलाप्राप्तिर्यावदायुः प्रवर्तते ३७६ द्वितीयस्थे रवौ ह्यानिश्चन्द्रे शत्रुक्षयं भवेत् भूमिजे बन्धनं स्वा
त्कं चानाविघ्नानि भानुजे ३७७ बुधे द्रविणसंपत्तिर्गुरौ धर्माभिवर्द्धनं यथाकामविनोदेन भृगौ कामं व्रजेत्फलम् ३७८ तृतीयस्थेषु पा
पेषु सौम्येष्वेव विशेषतः सिद्धिः स्यादचिरादेव यथाभिलषितं स्वति ३७९ चतुर्थस्थानगे जीवे पूजा संपद्यते नृपात् चन्द्रजे चार्थला
भः स्याद्भूमिलाभश्च भार्गवे ३८० वियोगः सुहृदां भानौ मन्त्रभेदा महीसुते बुद्धिनाशो निशानाथे सर्वनाशोऽर्कनन्दने ३८१ पञ्च
मे तु सुराचार्ये मित्रं वसुधनागमः शुक्रे पुत्रसुखावाप्तीरत्नलाभस्तथेन्दुजे ३८१ सुतदुःखं सहस्रांशौ शशाङ्के कलहः स्मृतः भौमे
कार्यविरोधः स्यात्सौरे बन्धुविमर्दनं ३८२ षष्ठस्थानगते सूर्ये रोगनाशं विनिर्दिशेत् चन्द्रे पुष्टिः क्षुजे प्राप्तिः सौरे शत्रुबलक्षयः
३८३ गुरौ मन्त्रोदयः प्रोक्तो भृगौ विद्यागमो भवेत् सर्वज्ञानार्थकौशल्यं नक्षत्रपतिनन्दने ३८४ सप्तमस्थानगे जीवे बुधे दैत्यगुरौ

मापयेत् ४३६ नगरग्रामकोटादिस्थविराणि च भूभृतां स्थपतिस्तास्थितयतिप्रविभागेन मापयेत् ४३७ स्निग्धादिभूभागसमुत्थितानां
न्यग्रोधबिल्वद्रुमखादिराणां शमीवटोदुम्बरदेवदारुक्षीरस्वदेशोत्थफलद्रुमाणां ४३८ उपोषितः शिल्पिजनस्तु येषां मध्यानुवीक्ष्यो
न्नकुठारकेण छिन्द्यात्ततो दिक्पतितोत्तरस्यां शुभे विलग्ने परिगृह्य शङ्कुम् ४३९ कारयमाणं परतश्च तस्य तदर्द्धमानेन ततो नु गृह्य
नीत्वा न्यसेत्तानि गृहे च तावद्यावत्स निष्ठानसमस्तशङ्कोः ४४० नन्दनिर्मुल्का कथितेशकोणे द्रुताशना रव्येसु भयेनिवान्त्या सुभद्रा
लीनैर्ऋतिभागसंस्था भद्रङ्करी मारुतकोणयाता ४४१ वृषाश्वपत्नागपदाङ्कितानां नन्दादिकानां क्रमशः शिलानां शेषविद्धा
नां सुदृढीकृतानां सुलक्षणानां ग्रहणं निरुक्तम् ४४२ कूर्मश्च शेषश्च जनार्द्दनश्री ध्रुवश्च मध्ये भवनस्य संस्थाः निवेशनीयाः क्रमशः
शिलानां प्रमाणमेतन्मुनिभिः प्रदिष्टम् ४४३ शिलाप्रमाणं क्रमशः प्रदिष्टं वर्णानुपूर्वेण तथाङ्गुलानां अथैकविंशं घनविस्तरं नन्दा
विस्तारके व्याससमितं तदर्द्धम् ४४४ तदर्द्धमानं त्वथ पिण्डिका स्यादूर्द्धाधिकान्यूनतरा न कार्या प्रमाणहीना तु तनोति कारिणी व्यङ्गाथ
सम्पद्विनिवर्तितेहा ४४५ घनाऽर्जिता मस्तरगेहमाने कार्या शिला शिल्पिजनानुकूला पाषाणगेहे कर्त्तव्या शिलापाषाणसंभवा शैलजे
शैलजा पीठं चैष्टके चैष्टकं स्मृतः ४४६ शिलान्यासादिको भेदः मूलपादो विधीयते पक्केष्टनिर्मिते चैव दृष्टकानां च कारयेत् ४४७ दृष्ट
कानिर्मितगेहे प्रमाणमिह लक्षयेत् अपरेषां क्रुहाणां तु शिलामानं न चिन्तयेत् ४४८ आधारभूतानु शिलाप्रकल्पात् दृढामनोज्ञाप
रिमाणयुक्ता सलक्षणा चापरिमाणमानानवाधिकान्यूनतरान दृष्टा ४४९ द्वाराधिपादीन्यतयो गजाश्वाः सम्पूजनीया वलिभिः समं

यारव्यञ्चतुर्द्वारमलिन्दैः सर्वतोयुतं राज्ञांसिद्धिकरम्प्रोक्तं सर्वतोभद्रसंज्ञकं ८८३ अथपञ्चदशः द्वारचक्रम्प्रवक्ष्यामियदुक्तम्पद्म
णापुरा सूर्यभाद्वचतुष्कन्तुद्वारस्योपरिविन्यसेत् ८८४ द्वेद्वेकोणेप्रदातव्यंशाखायुग्मेद्वयन्द्वयं अधश्चत्रीणिदेयानिवेदामध्येप्रति
ष्ठिताः ८८५ राज्यंस्यादूर्द्धनक्षत्रेकोणेषूद्वासनंभवेत् शाखायांलभतेलक्ष्मींध्वजेचैवमृतिर्भवेत् ८८६ मध्यस्थेषुभवेत्सौख्यंचि
न्तनीयंसदाबुधैः अश्विनीचोत्तराहस्ततिष्यश्रुतिमृगाःशुभाः ८८७ स्वातीपूष्णोवरोहिण्यान्द्वारशाखावरोपणे पञ्चमीधनदाचैव
मुनिनन्दवसौशुभं प्रतिपत्सुनकर्तव्यङ्कृतेदुःखमवाप्नुयात् द्वितीयायान्द्रव्यहानिःपशुपुत्रविनाशनं ८८८ तृतीयारोगदाज्ञेयाच
तुर्थीभङ्गकारिणी कुलक्षयेतथाषष्ठीदशमीधननाशिनी ८८९ विरोधकृत्त्वमावास्यानस्याशाखावरोपणं केन्द्रत्रिकोणेषुशुभैःपा
पैस्त्र्यायारिगैस्तथा ८९० घूनास्वरेशुद्धियुतेद्वारशाखावरोपणं शुभंस्याच्छुभवारेचपञ्चकेनत्रिपुष्करे आग्नेयधिष्ण्येसोमेह्निनकु
र्यात्काष्ठरोपणम् प्रणम्यवास्तुपुरुषंदिक्पालंक्षेत्रनायकं ८९१ द्वारशाखारोपणाञ्चकर्तव्यन्तदनन्तरम् शुभंनिरीक्ष्यशकुनंअन्यथा
परिवर्जयेत् ८९२ कुड्यांभित्वानकुर्वीतद्वारन्तत्रसुखेप्सुभिः कृत्तिकाभगमैत्रन्तुविशाखाचपुनर्वसुः ८९३ तिष्यंहस्तंतथार्द्राचक्रमा
त्पूर्वेषुविन्यसेत् मैत्रम्विशाखापौष्णंचनैरृत्यंयमदैवतं वैश्वदेवाश्विनीचित्राक्रमाद्दक्षिणमाश्रिताः पित्र्यम्प्रौष्टपदार्यम्णंतथामांस
न्तदैवतं ८९५ वारुणाश्विनसाविग्यक्रमात्पश्चिमसंस्थिता स्वात्यश्लेषाभिजित्सौम्यंवैष्णवम्वासवन्तथा ८९६ याम्यञ्चाश्ल्यङ्कमात्सौम्य
द्वारेषुचविनिर्दिशेत् द्वारर्क्षैस्तद्दिशाद्वारंस्थापयेद्वाविचक्षणः ८९७ स्तंभाद्यारोपणंशस्तन्तथैवविधिनाबुधैः अथोमुखैश्चनक्षत्रैर्दे

॥श्रीकाशीविश्वनाथपुरीमेढुण्ढिराजगणेशकेपास दाऊअग्निहोत्रीकेसि
द्धविनायकयन्त्रमे विश्वकर्माप्रकाशछपा दाऊपोथीवालेकेदु॰ मिलेगा।

न्तः कुर्याद्ग्रहमण्डलगान्ग्रहान् गन्धैः पुष्पैस्तथा धूपैः दीपैः कर्पूरसंभवैः ११९१ नैवेद्यैश्चापि भूयिष्ठैः फेणिकैः पूरिकादिभिः शष्कुली-
भिस्तथा खर्ज्जूरैर्लड्डुकैर्मोदकैस्तथा ११९२ नानाविधैः फलैश्चापि विधिवत्तोषयेत्सुरान् द्वाराग्रे भैरवन्देवं विधिवत्पूजयेत्ततः ११९३
दिक्पालान्पूजयेद्वास्तोः क्षेत्रपालञ्च मध्यतः होमङ्कुर्याद्ग्रहाणान्तु स्वशाखोक्तविधानतः ११९४ वास्तुहोमन्ततः कुर्याद्भूम्यादीनान्त
थैव च भैरवीभैरवाः सिद्धिग्रहा नागा उपग्रहाः भैरवस्य समीपस्थान्तान्सम्पूज्य यथाविधिः क्षेत्रपालस्य मन्त्रेण होमङ्कुर्याद्विधा
नतः ११९५ होमान्ते पञ्चभिर्विल्वैर्विल्वबीजैस्तथापि वा वास्तुहोमम्प्रकुर्वीत कोटपालस्य नामतः ११९६ स्वामिनामस्य मन्त्रेण प्रणवा
द्येन वै द्विज भूर्भुवः स्वरिति पूर्वेण पूजा वा होममेव च दुष्टग्रहाणाम्मन्त्रैश्च हुनेदष्टोत्तरं शतं प्रत्येकञ्जुहुयाद्विद्वान्तिलैर्वाथ घृतेन वा
११९७ उच्छिष्टमन्त्रं जपेन्मध्ये सहस्रेण शतेन वा अष्टोत्तरंशतं हुत्वा बलिन्दद्यादतः परं ११९८ पूरिकायाबलिम्पूर्वे दक्षिणे कृशरान्नतः
पश्चिमे पायसन्दद्यादुत्तरे घृतपायसं ११९९ दिक्पालानाम्बलिञ्चैव क्षेत्रपालबलिन्ततः कोटपालबलिञ्चैव कोटस्वामिबलिन्ततः
१२०० पुरोपरिपसुन्दद्याद्द्वाराग्रे मद्दिपन्ततः यमश्लोकञ्जपेत्पूर्वे सहस्रस्य प्रमाणतः १२०१ पूर्णान्दत्वाथ विधिवत्स्वशक्त्या दक्षिणा
न्वरेत् ब्राह्मणान्भोजयेत्पश्चात्ततः सिद्धिर्भविष्यति १२०२ पुरकर्मैतत्कृत्वा सन्ध्याकाले चनैऋते बलिन्दद्याद्विधानेन मंत्रान्पूर्वो
दितान्पठेत् १२०३ मांसोदनबलिञ्चैव मंत्रमेतदुदीरयेत् ॐ ह्रीं सर्वविघ्नानुत्सारय ननननननन मोहिनि स्तंभिनि मम शत्रुमोहय मोहय
स्तंभय स्तंभय अस्य दुर्गस्य रक्षां कुरु कुरु स्वाहा० बलिन्दत्वा तु नेनापि कृतकृत्यो भवेन्नरः दुष्टरक्षस्य यः स्वामी तन्मन्त्रेण च कारये

वि॰
प्र॰
१

श्रीगणेशायनमः जयतिवरदमूर्तिर्मङ्गलम्मङ्गलानांजयतिसकलवन्द्याभारतीब्रह्मरूपा जयतिभुवनमाताचिन्मयीमोक्षरूपादि
शतुममम्दे शोवाङ्मयःशब्दरूपम् १ आब्रह्मभुवनालोकागृहस्थाश्रममाश्रिताः यतस्तस्माद्गृहारम्भप्रवेशसमयंब्रुवेहम् २
प्रवक्ष्यामिमुनिश्रेष्ठशृणुष्वैकाग्रमानसः यदुक्तंशंभुनापूर्वम्वास्तुशास्त्रंपुरातनम् ३ पराशरःप्राहबृहद्रथायबृहद्रथःप्राहचवि
श्वकर्मणे सविश्वकर्माजगतांहितायप्रोवाचशास्त्रंबहुभेदयुक्तं ४ विश्वकर्मोवाच वास्तुशास्त्रंप्रवक्ष्यामिलोकानांहितकाम्य
या ५ पुरात्रेतायुगेह्यासीन्महाभूतम्व्यवस्थितम् स्वाप्यमानंशरीरेणसकलम्भुवनन्ततः ६ तन्दृष्ट्वाविस्मयन्देवागताःसेन्द्राभया
न्ताः ततस्तेभयमापन्नाब्रह्माणंशरणंययुः ७ भूतभावनभूतेशमहद्भयमुपस्थितम् क्वयास्यामःक्वगच्छामोवयंलोकपिताम
हः ८ माभयङ्कुरुतदेवाविगृह्यैतंमहाबलम् पातयाधोमुखंभूमौनिर्विशङ्काभविष्यथ ९ ततस्तेक्रोधसन्तप्तागृहीत्वातम्मह
बलम् विनिक्षिप्यमधोवक्त्रंस्थितास्तत्रैवतेसुराः १० तमेववास्तुपुरुषंब्रह्मासमकल्पयत् कृष्णपक्षेतृतीयायांमासिभाद्रपदेत
था शनिवारेभवज्जन्मनक्षत्रेकृत्तिकासुच योगस्तस्यव्यतीपातःकरणम्विष्टिसंज्ञकं १२ महान्तरेभवज्जन्मकुलिकेतुतथैवच
क्रोशमानम्महाशब्दंब्रह्माणंसमुपस्थित १३ चराचरमिदंसर्वन्त्वयासृष्टंजगत्प्रभो विनापराधेनचमांपीडयन्तिसुराभृशम् १४ व
रन्तस्मैददौप्रीतोब्रह्मालोकपितामहः ग्रामेवानगरेवापिदुर्गेवापत्तनेपिवा १५ प्रासादेचप्रपायांचजलोद्यानेतथैवच यस्त्वान्न
पूजयेन्मर्त्योमोहाद्वास्तुनरप्रभो १६ अश्रियम्मृत्युमाप्नोतिविघ्नन्तस्यपदेपदे वास्तुपूजामकुर्वाणस्तवाहारोभविष्यति १७ इत्यु

क्रान्तदेषेसद्योदेवो ब्रह्मविदांवरः वास्तुपूजांप्रकुर्वीत गृहारंभेप्रवेशने १८ द्वाराभिवर्तनेचैवत्रिविधेचप्रवेशने प्रतिवर्षंत्वयज्ञादौतथा
पुत्रस्य जन्मनि १९ व्रतबन्धेविवाहेचतथैवचमहोत्सवे जीर्णोद्धारेतथाशल्यवासेचैवविशेषतः २० वज्राग्निदूषितेभग्नेसर्पचा
ण्डालवेष्टिते उलूकवासितेसप्तरात्रौकाकाधिवासिते २१ मृगाधिवासितेरात्रौगोमार्जाराभिनादिते वारणाश्वादिविकृते स्त्रीणांयु
द्धाभिदूषिते २२ कपोतकगृहावासेमधूनांनिलये तथा अन्यैश्चैवमहोत्पातैर्दूषितेशान्तिमाचरेत् २३॥ अथभूमिदर्शनम् ॥
अथातःसंप्रवक्ष्यामिलोकानांहितकाम्यया श्वेतारक्तातथापीताकृष्णावर्णानुपूर्वतः २४ सुगन्धाब्राह्मणीभूमी रक्तगन्धातुक्ष
त्रिणी मधुगन्धाभवेद्वैश्यामद्यगन्धाचशूद्रिणी २५ मधुराब्राह्मणीभूमीकषायाक्षत्रियामता अम्लावैश्याभवेद्भूमिस्तिक्ताशूद्र
प्रकीर्तिता २६ चतुरस्रांद्विपाकारांसिंहोक्षाश्वेभरूपिणीं वृत्तांचभद्रपीठंचत्रिशूलंलिङ्गसन्निभं २७ प्रासादध्वजकुम्भादिदे
वानामपिदुर्लभां त्रिकोणांशकटाकारांसूर्पव्यजनसन्निभां २८ मुरजाकारसदृशांसर्पमण्डूकरूपिणीं खरानगरसङ्का
शांवक्रांचिपिटरूपिणीं २९ मुद्गराभांतथोलूककाकसर्पनिभांतथा सूकरोष्ट्राजसदृशांधनुःपरशुरूपिणीं ३० कृकलास
शवाकारांदुर्गम्यांश्चविवर्जयेत् मनोरमाचयाभूमिःपरीक्षेतप्रयत्नतः ३१ द्वितीयाहढभूमिश्चनिम्नाचोन्नतपूर्वके गम्भीराब्राह्मणी
भूमिर्नृपाणांतुङ्गमाश्रिता ३२ वैश्यानांसमभूमिश्चशूद्राणांविकटास्मृता सर्वेषांचैववर्णानांसमभूमिःशुभावहा ३३ शुक्लव
र्णाचसर्वेषांशुभाभूमिरुदाहृता कुशकाशयुताब्राह्मीदूर्वानृपतिवर्गगा ३४ फलपुष्पलतावैश्याशूद्राणांतृणसंयुता नदीघाता

श्रितांतद्वन्महापाषाणसंयुतां ३५ पर्वताग्रेषुसंलग्नाङ्गर्तीश्विवरसंयुतां वक्रांसूर्प्पनिभांतद्वत्कुटाभाङ्कुरूपिणीम् ३६ मुषल
भाम्महाघोरांवायुनावापिपीडितां वल्लभल्लकसंयुक्तांमध्येविकटरूपिणीम् ३७ श्वसृगालनिभां रूक्षांदन्तकैःपरिवा
रितां चैत्यश्मशानवल्मीकधूर्तकालयवर्जिताम् ३८ चतुष्पथमहावृक्षदेवमंत्रिनिवासतां दूराश्रिताञ्चभूगर्तयुक्ताञ्चैवविवर्ज
येत् ३९ इतिभूमिलक्षणं॥ अथफलानि॥ सुवर्णगन्धासुरसाधनधान्यसुखावहा व्यत्ययेव्यत्ययफलाश्चतत्कार्य्यम्परीक्षण
म् ४० चतुरस्रामहाधन्याद्विपाभाधनदायिनी सिंहाभासगुणान्पुत्रान्वृषाभापशुवृद्धिदा ४१ वृत्तासद्विजदाभूमिर्भद्रपीठनिभा
तथा त्रिशूलरूपावीराणांसुतान्निर्धनसौख्यदा ४२ लिङ्गाभालिङ्गिनांश्रेष्ठाप्रासादध्वजसन्निभा पदोन्नतिंमकुरुतेकुम्भाभा
धनवर्द्धिनी ४३ त्रिकोणाशकटाकारासूर्प्पव्यजनसन्निभा क्रमेणसुतसौख्यार्थधर्महानिकरीस्मृता ४४ मुरजावंशहासर्पम
ण्डूकाभाभयावहा नैस्वंखरानुकाराचमृत्युदाजगराग्निना ४५ चिपिटापौरुषैर्हीनासुकराभातथैवच काकोलूकनिभासद्दुः
खशोकभयप्रदा ४६ सर्पाभापुत्रपौत्रश्रीवंशाभावंशहानिदा शूकरोष्ट्राजसदृशीधनुःपरशुरूपिणी ४७ कुचैलम्मलिनान्मृ
र्खान्नसघ्नाञ्जनयेत्सुतान् हकलासशवाकारामृतपुत्राधनार्तिदा ४८ दुर्गम्यापापिनाम्वंशप्रजाभूमिंपरित्यजेत् मनोरमासु
तप्रदाहृढाधनप्रदामता सुतार्थेदानयाप्युदक्सुरेशदिक्सवामही ४९ गंभीरशब्दाजनयेत्पुत्रान्गंभीरनिस्वनान् तुङ्गापद्मा
न्वितान्कुर्य्यात्समासौभाग्यदायिनी ५० विकटाशूद्रजातीनानथादुर्गनिवासिनाम् शुभदानापरेषांचतस्कराणांशुभावहा ५१

स्वर्णवर्णास्तान्वर्णान्वर्णानामाधिपत्यदा शुक्लवर्णा च सर्वेषां पुत्रपौत्रविवर्द्धिनी कृष्णकाष्ठान्विनाशः सर्वसान्कुरुते सुतान् दूर्वान्वि
तावीरजनिःफलाढ्या धनपुत्रदा ५३ नदीघातास्त्रितामूर्द्धान्मृतवत्सांस्तथैव च दरिद्रान्मध्यमस्थाग्रतोवस्था मृषायुतान् ५४
बाणपत्रपुत्रानिंदायिनी सौख्यहारिणी वक्रानिवक्रान्जनयेत्पुत्रान्विद्याविहीनकान् ५५ शूर्पमार्जारलकुटनिभाभीतिसुतान्दिदा
शालामुशालासुतान्जनयेद्दंष्ट्राघातकान् ५६ घोराघोरप्रदा वायुपीडिता वायुभीतिदा वल्लभल्लकसंयुक्ता पशुहानिप्रदा सदा ५७
विकटाविकटान्पुत्रान्वत्सशृगालनिभा नया ददाति रूक्षापरुषादुर्वचान्जनयेत्सुतान् ५८ गृहस्वामिभयं चैत्यवल्मीके विपदः स्मृताः
धूर्तालयसमीपे तु पुत्रस्य मरणं ध्रुवम् ५९ चतुष्पथे त्वकीर्तिः स्यादुद्वेगो देवसद्मनि अर्थहानिः सचिवेश्मभे विपदुत्कटाः ६०
गर्तायां तु पिपासा स्यात्कूर्माभे धननाशनम्॥ अथ भूमिपरीक्षा॥ निखने हस्तमात्रेण पुनस्तेनैव पूरयेत् पांशुनाधिकमध्योना
श्रेष्ठा मध्याधमा क्रमात् ६१ जलेनापूरयेत्कूपं पदशतं गत्वा पदैः शतं तथैवागम्य वीक्षेत न हीनं सलिलाशुभा अरत्निमात्रं श्वभ्रे वा हि
तु लिप्तेव सर्वतः ६२ घृतमामशरावस्थं कृत्वा वर्तिचतुष्टयं ज्वालयेद्भूपरीक्षार्थं संपूर्णं सर्वदिङ्मुखं ६३ दीप्ता पूर्वादिदिक्स्थ्याद्वर्णाना
मनुपूर्वशः हलाकृष्टे न यो देशे सर्वबीजानि वापयेत् ६४ त्रिपञ्चसप्तरात्रेण न प्ररोहन्ति तान्यपि उत्तमा त्रिरात्रेण साङ्कुराशोभनामही
मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता तिलान्वा वापयेत्तत्र यवान्वा पि च सर्षपान् ६६ अथवा सर्वधान्यानि वापयेत्तु समन्ततः यत्नेन
प्ररोहन्ति तां भूमिं यत्नेन वर्जयेत् ६७ व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः यवाश्चौषधयः सप्त सर्वबीजानि चैव हि ६८ सुवर्णनाम्रसु

वि० मु० ३

षाणिश्वभ्रमध्यगतानिच यस्यनाम्निसमायान्तिसाभूमिस्तस्यशोभना ६९ पांशवोरेणुनांनीत्वानिरीक्षेदन्तरिक्षगाः अधोमध्योर्द्ध्वग
न्दृणांगतितुल्यफलप्रदाः ७० हस्तांप्रकृष्टबीजाङ्कोथ्युषितांब्राह्मणैस्तथा गत्वामहीङ्गृहपतिःकालेसाम्बत्सरोदिते ७१॥ अथशाकुना
॥ उत्थाहृपांस्वाध्ययनाम्बुकुम्भाविप्राश्ववीणापटहस्वनानि पुत्रान्विताःस्त्रीगुरवोमृदङ्गावाद्यानिभेरीनिनदाःप्रशस्ताः ७२ कन्या
सुधौतांबरवासकारीमृदःसुरस्यासुरभीसुगन्धा पुष्पाणिचामीकररौप्यमुक्ताप्रवालभद्राणिशुभावहानि ७३ भृङ्गारांजनवदैकप
शुभ्रोष्णीषचन्दनम् आदर्शव्यजनंवर्द्धमानाश्चापिशुभावहाः ७४ आमिषंदधिदुग्धंचनृपयानंछत्रमेवच मीनानिमिथुनंपुंसामायु
रारोग्यवृद्धिदम् ७५ कमलममलङ्गीतारवःसितोक्षमृगाद्विजाः गमनसमयेपुंसांधन्यागृहाद्यधिवासिते गजहयसवत्सिन्यस्त
धूमवराङ्गनाधनसुतसुखारोग्यायुःप्रदागृहकर्मणि ७६ गणिकाचाङ्कुशंदीपम्मालांबालांसुभूषितां नयात्वृष्टिर्गृहारंभेनिवेशेसम
भीष्टदा ७७॥ अथापशकुनानि॥ दुर्वाणीशत्रुवाणीचमद्यञ्चर्मास्थिरेवच तृणन्तुषन्तथासर्पचर्मचाङ्गारमेवच ७८ कार्पासलव
णम्पङ्कःक्लीवंतैलौषधानिच पुरीषकृष्णधान्यानिव्याधितामयन्त्रमेवच ७९ पतितोजटिलोन्मत्तोमुण्डोनग्नशिरस्तथा इन्धनानि
विरावञ्चद्विपक्षिमृगमानुषम् ८० ज्वलिताग्निसुदग्धासुधूमितासुचपश्यतः मरणंनिर्दिशेत्प्राज्ञस्तत्रशल्यंविनिर्दिशेत् ८१ य
स्यापशकुनन्तस्यशल्यन्तत्रभवेद्गृहे तत्रवासन्नकुर्वीतगृहञ्चैवनकारयेत् ८२॥ अथखननविधिः॥ ज्योतिश्शास्त्रानुसारे रम्यः
शुभदिनेशुभवासरे सुलग्नेसुमुहूर्तेचसुस्नातःप्राङ्मुखोगृही ८३ पूजयेद्गणनाथञ्चग्रहांश्चकलशस्थितान् परीक्षितायांभूभागे

मयेनानुलिप्यच ८४ तत्रसंपूजयेद्विप्रान्देवज्ञश्चतथैवच यावत्प्रमाणाभूस्तास्यांमुहूर्त्तेनतावनागृही ८५ पञ्चगव्येनौषधिजलैस्तथा
पञ्चामृतेनच सेचयेच्छुद्धिकामेनभूसंस्कारांश्चकारयेत् ८६ तत्रकुम्भंनिवेश्यादौहेमगर्भंफलैर्युतम् सर्वधान्ययुतंसर्वगन्धैस्स
र्वौषधैर्युतम् ८७ पुष्पान्वितंरक्तवर्णंसवस्त्रंमंत्रमंत्रितम् तस्मिन्नावाहयेत्देवान्वरुणप्रमुखांस्तथा ८८ तस्मिन्नावाहयेद्भूमिंश
शैलवनकाननं नदीनदसमायुक्तांकुण्डिकाभिश्चभूषितां ८९ सागरैर्वेष्टितांतत्रपूजयेत्सार्थयेत्ततः दिक्पालान्कुलदेवीश्चदेवा
न्यक्षांस्तथोरगान् ९० बलिञ्चदत्वाविधिवत्जलायेतिजपेत्ततः षडक्षरंचरुद्रजापञ्चकारयेद्विधिपूर्वकम् ९१ तस्मिन्संपूजयेद्वास्तुं
मार्घ्यपुष्पेन्पूजयेत्ततः ॐनमोभगवतेवास्तुपुरुषायकपिलायच ९२ पृथ्वीधरायदेवायप्रधानपुरुषायच सकलगृहप्रासादपुष्करो
द्यानकर्मणि ९३ गृहारंभप्रथमकालेसर्वसिद्धिप्रदायक सिद्धदेवमनुष्यैश्चपूज्यमानोदिवानिशं ९४ गृहस्थानेप्रजापतिक्षेत्रेस्मि
न्निष्ठसाम्प्रतं इहागच्छइमांपूजांगृहाणवरदोभव ९५ वास्तुपुरुषनमस्तेस्तुभूमिशय्यारतप्रभो मद्गृहन्धनधान्यादिसमृद्धिंकुरु
सर्वदा ९६ इतिप्रार्थ्यततोभूमौसंलिखेद्वास्तुपूरुषम् पिष्टातकैस्तंडुलैर्वानागरूपधरंविभुं ९७ आवाहयेद्वेदमन्त्रैःपूजयेच्चस्वशक्ति
तः आवाहयाम्यहंदेवंभूमिस्थंचस्वधोमुखं ९८ वास्तुनाथंजगत्प्राणंपूर्वस्यांप्रथमाश्रितम् विष्णोरराटेतिमंत्रेणपूजयेत्सर्वनायक
म् ९९ नमोस्तुसर्पेभ्यइतिवापूजयेच्चस्वशक्तितः कुक्षिप्रदेशेनिखनेद्वास्तुनागस्यमन्त्रतः १०० त्रिषुत्रिषुचमासेषुनभस्यादिषुचक्र
मात् यद्दिङ्मुखोवास्तुनरस्तन्मुखंसदनंशुभम् १०१ अन्यदिङ्मुखगेहन्तुदुःखशोकभयप्रदम् वृषार्कादित्रिकंवेद्यांसिंहादिगणये

वि० मु० ४

| | | | |
|---|---|---|---|
| दू | वाप | नै | ऋघ्र |
| भा | मा | फा | ज्ये |
| कु | पौ | वै | श्रा |
| का | मा | चै | आ |

[illegible] स्त्वानागपृष्ठेतैस्त्रिभिस्त्रिभिः १०३ भाद्राद्यैर्वामपा
र्श्वेवनस्यक्रोडेमृहंशुभम् वृषान्तकालसर्पसंहारेणप्रसर्पति १०४ विदिक्षुपृष्ठवास्तोश्चमुखेस्याज्यस्त्वतुर्य
कम् खनेत्त्वसौरमानेनव्यत्ययस्त्वाशुभंभवेत् १०५ चतुस्त्रिकादिशालानामेषदोषोनविद्यते एकंनागोदुसंस्तु
ख्यामन्दिरारम्भणंशुभम् १०६ अधोमुखेचनक्षत्रेशुभेह्निशुभवासरे चन्द्रतारानुकूल्येचखननारम्भणंशुभम्
त्रिषुत्रिषुचमासेषुमार्गशीर्षादिषुक्रमात् पूर्वदक्षिणतोयेशपौलस्त्याशांक्रमादयुः १०८ स्तंभेवंशविनाशःस्याद्द्वारेवह्निभयंभवेत्
गमनेकार्यहानिस्त्याद्गृहारंभेकुलक्षयः १०९ रक्षःकुबेराग्निजलेशयाम्यवायव्यकाष्ठासुचसूर्य्यवारात् वसेदगुस्त्वाष्टसुदिग्भ
चक्रेमुखेविवर्ज्योगमनङ्गृहंच ११० शिरःखनेविनाशःस्यान्मातृपित्रोश्चपृष्ठके स्त्रीपुत्रनाशःपुच्छेतुगात्रेपुत्रविनाशनं १११
कुक्षौसर्वसमृद्धिःस्याद्धनधान्यसुतागमः सिंहादिषुत्रमासेषुआग्नेयाकुक्षिमाश्रितः ११२ वृश्चिकादिषुईशान्याकुम्भादिषुच
वायुदिक् वृषादिषुचनैरृत्येमुखंपुच्छंनशोभनं ११३ कृत्तिकाद्यंसप्तपूर्वेमघाद्यंसप्तदक्षिणे मैत्राद्यंपश्चिमेसप्तधनिष्ठाद्यन्तथो
त्तरे ११४ अयेचन्द्रेस्वामिभयङ्कुम्भकर्णोचपृष्ठके दक्षिणेचधनन्दद्युर्वामेस्त्रीसुखसंपदा ११५ गृहोपलब्धक्षेषुपत्रक्षेषुच
न्द्रमाः पलाकारप्रकेदेयङ्कुम्भकादिक्रमेणच ११६ अस्पस्त्वन्द्रस्यवास्तोश्चलग्नेदृष्टेनपश्यते लग्नादृक्षाद्विचार्य्योसौचन्द्रःस रामः
द्यःफलप्रदः ११७ गृहचन्द्रेसन्मुखस्थेपृष्ठस्थेनशुभंगृहम् वामदक्षिणगश्चेन्दुःप्रशस्तोवास्तुकर्मणि ११८ लोहदण्डंचसम्पूर्ण

भैरवञ्चतथैवच नद्दिक्पालन्नमस्कृत्यपृथिवीन्तथैवच ११९ छिवोनामेतिमन्त्रेण लोहदण्डंप्रपूजयेत् निवर्तयामीत्यृचयाऽभ्य
र्च्येद्दीपान्तुमापतिम् १२० बलेनलोहदण्डेननिखनेद्वास्तुरूपं यावत्प्रमाणंभुवमेतिनावत्तस्यस्थितिर्भवेत् १२१ तंलोहदण्डं
वस्त्राक्तंब्राह्मणायनिवेदयेत् पुत्राद्यम्विषमेकुल्येसमेकुल्येतुकन्यकां १२२ निर्दिष्टेतुतयोर्मध्येलोहखण्डान्निकृन्तयेत् तस्मि
न्कालेशुभाम्वाणीमङ्गल्यंवाह्यदर्शनम् १२३ वेदगीतध्वनिंपुण्यफललाभंतथैवच वेणुवीणामृदङ्गानांस्वरणंदर्शनंशुभ
म् १२४ दधिदूर्वाङ्कुशाश्चेतिकल्याणद्रव्यदर्शनम् सुवर्णरजतन्ताम्रंशङ्खमौक्तिकविद्रुमान् १२५ मणयोरत्नवैडूर्यस्फाटि
कंसुखदामृदः गारुडञ्चफलंपुष्पंमृन्मयंगुल्ममेवच १२६ खाद्यानिकन्दमूलानिसाभूमिःसुखदायिनी कण्टकञ्चतथासर्पवृ
र्जुंदर्दुरमेवच १२७ वृश्चिकाश्मकवज्राञ्चविवरंलोहमुद्गरम् केशाङ्गारकभस्मञ्चचर्मास्थिलवणन्तथा १२८ रुधिरञ्चतथाम
ज्जारसाक्रान्तानशोभना॥ इतिवास्तुशास्त्रेभूम्यादिपरीक्ष्यालक्षणंप्रथमोऽध्यायः १॥ अथस्वप्नविधिः॥ गणेशंलोकपालं
श्चपृथिवींचविशेषतः ग्रहांश्चकलशेपूज्ययथामन्त्रंयथोदितम् १२९ यथाकल्पमुपस्थित्यशुचौदेशेकुशासनः भूमौसुप्त्वेनव
स्त्रेणशीर्षेसंपूजयेच्छ्रियम् १३० पश्चाच्चभद्रकालीञ्चवलिन्दत्वातथैवच सर्वबीजान्वितान्कुंभान्सर्वौषधैर्युतान् १३१ कृत्वो
भयतटेरम्यान्नवान्शुद्धोदकान्वितान् कल्पयित्वासुमनसःकृत्वास्वस्त्ययनादिकम् १३२ सावधानःशुचिःसम्यक्सोमवासीजिते
न्द्रियः माऽञ्जुखोहद्रुद्रेतिहृद्दिक्रम्विधिंजपेत् १३३ षट्कर्मंचरुद्रजापञ्चकारयेत्प्रयतःशुचिः १३४॥ सकारांतरं॥ दुकूलयुक्त

मणि भृत्त्रेन्द्रः समंत्रिदैवज्ञपुरोहितोनंः स्वदेवतागारमनुप्रविश्य निवेशयेत्तत्र दिगीश्वरार्चाम् १२५ अभ्यर्च्यमन्त्रैस्तुपुरोहितस्ता म
नश्चनस्यांभुविसंस्कृतायाम् दर्भैश्चकृत्वानरमङ्गनैस्ताङ्कि रेत्समन्तान्सितसर्षपैश्च १२६ द्वाञ्लींसदूर्वामयनागयूथिकृत्त्वोपधा
नंप्रिरसिद्धितीयाः पूर्णान्घटान्पुष्पफलान्विनांस्तानाशासुकुर्यात्वतुरःक्रमेण १२७ पञ्चायतोदूरमुदैनिदैवमावर्त्यमन्त्रान्प्र
नस्तथैतान् लघ्वेकभुक् दक्षिणपार्श्वशायी स्वप्नंपरीक्षेतनयथोपदेशम् १२८ नमःशम्भोत्रिनेत्रायरुद्रायवरदायच वामनायवि
पायस्वप्नाधिपतयेनमः १२९ भगवन्देवदेवेशशूलभृद्वृषवाहन इष्टानिष्टेसमाचक्ष्वस्वप्नेसुप्तस्यशाश्वत १४० एकवस्त्रः कुशा
स्तीर्णेसुप्तःप्रयतमानसः निशान्तेपश्यतिस्वप्नंशुभम्वायदिवाशुभम् १४१ चतुरस्त्रांसमांशुद्धांभूमिंकृत्वाप्रयत्नतः तस्मिन्दिक्
साधनङ्कार्यम्रत्नमध्यगतेदिशि १४२ पूर्वस्यांचभवेल्लक्ष्मीराग्नेय्यांशोकमादिशेत् याम्यांप्राणनियमहारम्भैर्ऋत्येचमहाभयं १४३
पश्चिमेकलहङ्कुर्याद्वायव्याम्मृत्युमादिशेत् उत्तरेवंशवृद्धिःस्यादीशानेरत्नसञ्चयः १४४ दिङ्मूढेकुलनाशःस्याद्व्रजेदारिद्यमादि
शेत्॥ अथसमयशुद्धिः॥ चैत्रेव्याधिमवाप्नोतियोनवङ्कारयेद्गृहम् वैशाखेधनरत्नानिज्येष्ठेमृत्युस्तथैवच ४५ आषाढेभृत्यरत्नानि
पशुवर्जमवाप्नुयात् श्रावणेमित्रलाभन्तुहानिंभाद्रपदेतथा १४६ युद्धञ्चैवाश्विनेमासिकार्त्तिकेधनधान्यकं धनवृद्धिर्मार्गशीर्षेपौषेत
स्करतोभयम् १४७ माघेत्वग्निभयम्विन्द्याल्लक्ष्मीवृद्धिश्चफाल्गुने गृहसंस्थापनंसूर्येमेषस्थेशुभदंभवेत् १४८ वृषस्थेधनवृद्धिःस्या
न्मिथुनेमरणंभवेत् कर्कटेशुभदंप्रोक्तंसिंहेभृत्यविवर्द्धनम् १४९ कन्यारोगन्तुलासौख्यंवृश्चिकेधनधान्यकं कार्मुकेचमहाहानिर्मक

रिस्याद्दनागमः १५० कुंभेतु रत्नलाभः स्यान्मीने स्वप्नभयावहम् चापमीनान्त्ययुक्कन्यामासाः दोषवहास्मृताः १५१ ज्येष्ठेऽर्जेमाघर्गि
हास्थ्याः सौरमानेतु शोभनाः मासेतपस्येनपसि माधवेनभसित्विषे १५२ अजैवगृहनिर्माणं पुत्रपौत्रधनप्रदम् विधिद्देषपिव
लेषुस्वानुकूलेशुभेदिने १५३ तृणदारुगृहारंभे मासदोषो न विद्यते पाषाणेष्ट्यादिगेहानि निन्द्यमासेन कारयेत् १५४ निन्द्यमा
सेपि चन्द्रस्य मासेन शुभदं गृहम् गोचराष्टकवर्गाभ्यामावेधश्चिविचिन्तयेत् १५५ दशान्तरदशादीनां विचारश्चात्र कर्मणि गु
रुशुक्रबले विप्रा स्तूर्यभूमिजयोस्तथा १५६ शशिसौम्यबले सौरे वर्णानुक्रमपूर्वशः गृहारंभं प्रकुर्वीत वर्णनाथबलेसति १५७
सर्वेषामपि वर्णानां सूर्यचन्द्रबलं स्मृतं विषमस्थेरवौ स्वामी पीड्यते गृहिणी विधौ १५८ शुक्रेण पीड्यते लक्ष्मीर्जीवेन सुखसंपदः
बुधेन पुत्रपौत्राश्च भौमेन भ्रातृबान्धवाः १५९ सौरेण दासवर्गाश्च पीड्यते नात्र संशयः विशेषेण तु सूर्यस्य बलेसेनात्कुहम्बुधैः ॥
१६० सर्वेषामपि वर्णानां रविशुद्धिर्विधीयते दशापतौ हीनबले वर्णनाथे तथैव च पीडितर्क्षगते सूर्ये न विदध्यान्निकेतनं प्र
थमे कोष्टगो गच्छेद्द्वितीये चार्थनाशनम् १६२ तृतीये धनलाभं च चतुर्थे भयदो रविः पञ्चमे पुत्रनाशाय शत्रुनाशाय षष्ठगे १६३ स्त्री
कष्टं सप्तमे सूर्ये मृत्युश्चाष्टमगेहगे नवमे धर्मनाशाय दशमे कर्मसंयुतिः १६४ एकादशे भवेल्लक्ष्मीर्द्वादशे च धनक्षयः पुत्रेद्वि
तीये चूने च धर्मे मध्यबलो रविः १६५ द्वितीयपुत्रादुगतो विश्वाहान्यरतः शुभः अस्तंगता नीचराशिस्थाः पराणप्तोपरैर्जिताः १६६ वृ
द्धस्यावालभावस्था वक्रगाश्चातिचारगाः रिपुदृष्टिविशेषेयानाउल्कापातेनदूषिताः १६७ नक्षत्रनियतद्वागेहप्रारंभेनानयकुर्जयेत् ॥

स्वामिहस्तप्रमाणेनज्येष्ठपत्नीकरेणच १६८ ज्येष्ठपुत्रकरेणापिकर्मकारकरेणच अनामिकानंहस्तःस्याद्वूर्द्ध्वाद्दो:प्रांगाकः
१६९ कनिष्ठिकामध्यमावाप्रमाणेनैवकारयेत् स्वामिहस्तप्रमाणेनज्येष्ठपत्नीकरेणाच १७० गर्भमानंभवेद्देहन्तृणांमोक्षेउ
रातनै: स्वामिहस्तप्रमाणेनगृहद्रुव्योदतन्द्रितः १७१ हस्तादिरेणुपर्य्यन्तमयुग्मंयुग्ममेवच कृष्णपक्षेतिथिंषष्ठिंद्रुराडानै
रविसंक्रमे १७२ रविभौमदिनेविष्ट्याम्व्यतीपातेचवैधृतौ मासदग्धंवारदग्धंतिथिंषष्ठीम्विवर्जयेत् १७३ अनुक्तेष्वेवधिष्ण्ये
षुनकर्त्तव्यंक्रुदावन ऋकचनिथिदग्धत्त्वयोगानाम्वज्रसंज्ञकम् १७४ उत्पातैर्दूषितंऋक्षन्निसर्गान्दर्शसंज्ञकम् वज्रव्याघा
तशूलेषुव्यतीपातेतिगण्डयो: १७५ विष्कुंभकुल्यडपरिघंवर्जयोगेषुकारयेत् स्वातीमैत्रेयमादेन्द्रगान्धर्वेभमरौहिणे १७६ ल
ग्नोक्तायादिकर्त्तव्यमन्यत्रपरिवर्जयेत् विस्तारेणहतंदैर्घ्यम्विभजेदष्टभिस्ततः १७७ यच्छेषंसभवेदायोध्वजाद्यास्तेसुरप्रधा
ध्वजोधूम्रोहरि:श्वागौःखरोभौवायसोष्टमः १७८ पूर्वादिदिक्षुचाष्टानांध्वजादीनामवस्थितिः स्वस्थानात्पञ्चमेस्थानेवैर
त्वञ्चमहद्भवेत् १७९ विषमायाःशुभःप्रोक्तःसमायःप्रोकदुःखदः स्वस्थानगाःवलिष्ठास्युर्नैवान्यस्थानगाःशुभाः १८० ध्वजः
सिंहेनोचगजेह्येनगविशुभप्रदाः वृषोनपूजितोल्यत्रध्वजःसर्वत्रपूजितः १८१ वृषसिंहगजाश्चैवखुटकर्पटकोटयो द्विपःपुनःप
योक्तव्योवापीकूपसरःसुच १८२ मृगेन्द्रमासनेदद्याच्छयनेषुगजंपुनः वृषम्भोजनपात्रेषुछत्रादिषुपुनर्ध्वजं १८३ अग्निवेश्मसु
सर्वेषुगृहेवस्तुपजीविनां धूमंनियोजयेत्केचित्स्वानंम्लेछादिजातिषु १८४ खरोवैश्यगृहेशस्तोध्वांक्षःशेषकुटीषुच वृषसिंहध्व

जाश्चापिशालदपुरवेश्मसु १८५ गजायेवाध्वजायेवागजानांसदनंशुभम् अश्वालयन्ध्वजायेवखरायेवृषभेपिवा १८६ उष्ट्राणांम
न्दिरङ्कार्यङ्गजायेवावृषध्वजे पशुसद्मखरायेचध्वजायेवाशुभपदम् १८७ शय्याशुवृषभःशस्तःपीठेसिंहंशुभपदः अमंत्रछत्र
वस्त्राणांवृषायेवाध्वजेपिवा १८८ पादुकोपानहौकार्यौसिंहायेध्यथवाध्वजे स्वर्णरूप्यादिधातूनामन्येषान्तुध्वजःस्मृतः १८९
शास्त्रेषुध्वजःशस्तःश्नीच्याङ्कुर्येन्मुखं सिंहस्त्वभूभ्रांशास्त्रउदीच्यास्त्वमुखंशुभं १९० विप्राम्वृषःप्राग्वदनंभूभृतांदक्षि
णेगजः सर्वेषामेवचायानान्ध्वजःश्रेष्ठतमोमतः १९१ ध्वजायस्त्रात्रियविप्राःप्रशस्तागुरुरब्रवीत् सिंहायःसर्वथान्याज्योब्राह्म
णेनरवेपरुना १९२ सिंहायेचखडेनागेहेअल्पापत्यःप्रजायते ध्वजायेपुर्णसिद्धिःस्याहृषायःपशुवृद्धिदः १९३ गजायेसंपदांवृ
द्धिःशेषायाःशोकदुःखदाः पिण्डेनवाङ्कुङ्गजवृद्धिनागाष्टसागरैः १९४ नागैश्चगुणितेभक्तेकमादेनेपदार्थकाः नागाद्विनव
सूर्योष्टभनिष्यृक्षखभानुभिः १९५ आयोवारोंशकोद्रव्यमृणाभृक्षंतिथिर्युतिः आयुश्चाथगृहेशर्क्षंगृहभैक्यंमृतिप्रदम् १९६
संपूर्णाःशुभदास्तेनेह्यसंपूर्णास्त्वनिष्टदाः धिष्णोचवसुभिर्भक्तेव्ययःस्याद्बेषकाङ्कके १९७ धनाधिकङ्गृहस्वद्धौनिर्द्धनायत्र
णाधिकम् व्यायान्वितेक्षेत्रफलेध्रुवाद्यस्तरसंयुते १९८ त्रिभिःशेषेक्रमादिन्द्रयमभूम्यधिपांशकाः इन्द्रांशेपदवीवृद्धिर्महत्सौख्यं
प्रजायते १९९ यमांशेमरणान्नूनंरोगशोकमनेकधा भूजांशेधनधान्याप्तिःपुत्रवृद्धिश्चजायते २०० राशिकूटादिकंसर्वंदम्पत्योरि
वचिन्तयेत् नैःस्वंद्विर्द्वादशेनूनंत्रिकोणेह्यनपत्यता २०१ षडष्टकेनैधनंस्याद्यत्स्वयेनधनंस्मृतं घूनस्थितेपुत्रलाभंस्त्रीलाभश्च

नथैवच २०२ जन्मतृतीयेचतथाधनधान्यागमोभवेत् दशमैकादशेचन्द्रोधनायुर्वृद्धिपुत्रदः २०३ चतुर्थाष्टमरिष्फस्थोमृत्युपुत्रविना
शदः त्रिकोणेत्वनपत्यंस्यात्केचिद्वन्धुगृहेशुभं २०४ वर्द्धनिचन्द्रसुतयोनैतन्ममसम्मतंस्मृतं अश्विन्यादित्रयम्मेषेसिंहेप्रोक्तंम्मघा
त्रयम् २०५ मूलादित्रितयञ्चापेशेषराशिद्विकेद्विके स्वर्क्षांस्वाराशयंशाःसदावह्निभयप्रदाः २०६ शेषग्रहाणाम्वाराशाःकर्तुरि
ष्टार्थसिद्धिदाः गृहस्यागतभंयत्तुनद्विराश्यात्मकंयदि २०७ तन्नवांशावशात्तत्रज्ञातव्यंसर्वदागृहं विपत्प्रदाविपत्तारांप्रत्यरीशनि
कूलदा २०८ निधनाख्यानुयातारासर्वथानिधनप्रदा विवर्ज्येतारकास्वेतान्निर्माणम्प्रशुभप्रदम् २०९ प्रत्यरिस्तूयमभयदात्रिविशा
र्द्धेतुमृत्युदा निधनाख्यानुयातारास्त्रीसुतार्तिप्रदायिनी २१० कुर्वन्नज्ञानतोमोहाद्दुःखभाग्व्याधिभाग्भवेत् तिथौरिक्तेदरिद्र
त्वंदर्शेगर्भनिपातनं २११ कुयोगेधनधान्यादिनाशःपातस्वमृत्युदः वैधृतौसर्वनाशायनक्षत्रैकेयतथैवच २१२ आयुर्विहीने
गेहेतुदुर्भगत्वम्प्रजायते नाडीवेधोनस्तुभद्रस्त्वारोगभयप्रदा २१३ गणावैरेपुत्रहानिर्धनहानिस्तथैवच योनौकलिर्महादुः
खंयमांशेमरणद्वयम् २१४ नक्षत्रैकेस्वामिमृत्युर्वेरोवंशविनाशनम् पापवारेदरिद्रत्वंशिशूनाम्मरणन्तथा २१५ केचित्कुनिं
षधंप्राहुश्चौरभीतिस्तुजायते स्वामिहस्तप्रमाणेनगृहंकुर्याद्वानने रत्न्यादिहस्तपर्यन्तमोजसंख्याप्रशस्यते करमानादधि
कश्चेत्तदाङ्गुलानिप्रदापहित्वाचक्षेत्रफलङ्गुणितेनप्रसाधयेदिष्टसिध्यर्थम् २१७ करमानादधिकश्चेदङ्गुलानिप्रसाधयेत्
दीर्घेदैर्ध्यानिवानूनञ्चविस्तीर्णेकदाचन २१८ अङ्गुलैष्ठकल्पिता नाभिर्वर्गीकृत्यपदंभवेत् प्रान्तहस्तादिमानंस्यात्कुर्यादापतनंन

न २१९ एकादशकरादूर्द्ध्वं यावद्द्वात्रिंशहस्तकं तावदायादिकं चिंत्यं तदूर्ध्वं नैव चिन्तयेत् २२० आयव्ययौ मासशुद्धिं न जीर्णे चिन्तये
द्गृहे शिलान्यासं सम्यक्कुर्वीत मध्येनस्य विधानतः २२१ ईशान्यां देवतागेहं पूर्वस्यां स्नानमन्दिरम् आग्नेय्यां पाकसदनं भाण्डागारं
समुत्तरे २२२ आग्नेयपूर्वयोर्मध्ये दधिमन्थनमन्दिरं अग्निप्रेतेशयोर्मध्ये आज्यगेहं प्रशस्यते २२३ याम्यनैर्ऋत्ययोर्मध्ये पुरीष
त्यागमन्दिरम् नैर्ऋत्याम्बुपयोर्मध्ये विद्याभ्यासस्य मन्दिरम् २२४ पश्चिमानिलयोर्मध्ये रोदनार्थं गृहं स्मृतम् वायव्योत्तरयोर्मध्ये
रतिगेहं प्रशस्यते २२५ उत्तरेशानयोर्मध्ये औषधार्थं तु कारयेत् नैर्ऋत्यां सूतिकागेहं नृपाणां भूमिमिच्छतां २२७ आसन्नप्रसवे
मासि कुर्याच्चैव विशेषतः तद्वत्प्रसवकाले स्यादिति शास्त्रेषु निश्चयः २२८ मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने प्रसूतिसंभवे काले गृहा
रम्भणमिष्यते २२९ गुरोरधो लघुस्थाप्यः पुरस्तादूर्ध्ववन्यसेत् गुरुभिः पश्चिमे पूर्वे सर्वलघ्ववधिर्विधिः २३० स्यादलिन्दो लघुस्था
नेनालिन्दं गुरुमाश्रितं प्रदक्षिणे गृहद्वारादलिन्दे दशषड्द्विधा २३१ ध्रुवसंज्ञं गृहं त्वाद्यं धनधान्यसुखप्रदम् धान्यं धान्यप्रदं नृ
णां जयं स्याद्विजयप्रदम् २३२ नन्दं स्त्रीहानिदं नूनं खरं क्लेशप्रदं विनाशनम् पुत्रपौत्रप्रदं कान्तं श्रीपदं स्यान्मनोरमं २३३ सुवक्त्रं भोगद
न्नून्दुर्मुखं विमुखप्रदम् सर्वदुःखप्रदं क्रूरं विपुलं शत्रुभीतिदं २३४ धनदं धनदं क्षेमं क्षयं सर्वक्षयावहम् आक्रन्दं शोकजनकं वि
पुलं श्रीयशःप्रदम् २३५ विपुलं नामप्रासादं शान्धनं दं विजयाभिधं प्रदक्षिणो सप्तसु पादादौ वन्दे द्विधा लघुस्थानसमाश्रितं गृहस्यपू
र्वादिगतेष्वलिन्देष्वेवं भवेयुर्दशषड् भेदाः २३६ भवेयुर्मेत्सु भालिन्दं गृहं कूपालसंज्ञकं विस्तराद्द्विगुणं दैर्घ्यं हस्तामि विनाशनं २३७

निर्थकनगृहंस्याद्रूपमाराजसंभवम् केचिदलिन्दकंद्वारंप्रवदन्तिमनीषिणः २३९ केचिद्दलिन्दंशालाञ्चकेचिदालिन्दकन्त्वतत्
गृहवाह्यस्थिताःकाष्ठागृहमत्यन्तनिर्गता २३९ काष्ठंकाष्ठस्ययद्देहनद्वाचालिन्दसंज्ञकं यहाद्बहिर्यथेकाष्ठागृहस्यान्तर्गताश्च
ये २४० नेषाङ्कोष्ठीकृतन्निर्मगेहञ्चालिन्दसंज्ञकं स्तंभहीनङ्कुह्यद्वाह्यान्निर्गतङ्काष्ठनिर्मितं २४१ मध्यातूर्ध्वगतङ्केहंतच्चालिं
दसंज्ञकं यत्रालिन्दञ्चतैवद्वारमार्गंमप्रशस्यते २४२ अलिन्दद्वारहीनञ्चगृहङ्कोष्ठीसमंस्मृतम् यत्रालिन्दंनत्रशालानत्रद्वारञ्चशोभ
नं २४३ शालालिन्दद्वारहीनंनगृहङ्कारयेद्बुधः यत्वास्तुनिचविस्तारःसैवोच्छ्रायःशुभप्रदः २४४ स्त्रकशालोगृहःकार्योविस्तार
द्विगुणोदयः चतुश्शालगृहस्यैवतुच्छ्रायोव्याससम्मितः २४५ विस्तराद्द्विगुणंदैर्घ्यमेकशालेप्रशस्यते विस्तीर्णंपञ्चवेदेहन्तदूर्ध्वं
मेकशालकं २४६ द्विशालेद्विगुणंप्रोक्तंत्रिशालेत्रिगुणन्तथा चतुश्शालेपञ्चगुणंनकुर्यान्नैकशालकेत् २४७ विस्तारेचत्रिभाग
नुच्छ्रायोत्तमसंज्ञकं एकशालागेहस्तुसंत्यक्त्वाद्येचदक्षिणपश्चिमा २४८ त्रिशालेपूर्वतोहीनङ्कुर्यात्सौम्यवर्जितं ऊर्ध्वभागत्रयन्त्यक्त्वा
अधोभागद्वयन्तथा २४९ मध्येनाभिंविजानीयादितिप्राहपराशरः पूर्वादिषुचतुर्दिक्षुवाममेकादशोध्रुवः २५० विस्तारस्यार्धदै
र्घ्यस्यतत्रैवैकसंयुतम् वामस्थानादिकोणेषुध्रुवविस्तारदैर्घ्ययोः २५१ एकाद्यास्तेक्रमात्सर्वेकार्यावेदसमन्विता अनेनैवप्रकारे
णक्रियमाणोत्रवास्तुनि २५२ आयव्ययादिसंसिद्धिंवक्ष्यंतिपूर्वजाः॥ अस्यार्थः यदिकश्चिदेकमेवगृहङ्करोतितदानागोकुसंत्य स्त्र:
ज्यसौम्यवर्जितं उत्तरशालाहीनंगृहंयदिद्विशालकंगृहंक्रियतेनदादक्षिणपश्चिमेशालाकार्याः त्रिशालेपूर्वतोहीनंकार्यंत्रिशालेउत्त

रशालयावाहीनंकार्यं शालाविभागस्तुअनेनैवविधानेन कार्यः पूर्वेऽर्द्धभागत्रयंत्यक्त्वापश्चिमेभागद्वयंत्यक्त्वायोमध्यगतोभागःस
नाभिः तत्रशालानविधेया अनेनैवप्रकारेणपूर्वादिदिक्षुएकादशोविस्तारदैर्घ्ययोःएकैकंभागंसंयोज्यवातादिकोणेषुउत्तरशाला
हीनत्वान्नदेयंसर्वेएकाद्याःचतुःशालांतावेदसमन्विताःकार्याः अनेनैवप्रकारेणशालासुनेवास्तुनिम्नायव्ययादिशुद्धिर्नेविचिन्तनी
या॥ एकशालेआयव्ययादिविचारःकर्तव्यः द्विशालेआयव्ययादिशुद्धिर्नेविचारणीयाः यतःनिर्गमालिंदानिपूर्वादीनियानितु
दिशंवेश्मानांतानिनयाह्यानितद्वास्तुपरिग्रहः २५३ ब्राह्मणानांचतुःशालंक्षत्रियाणांत्रिशालकं द्विशालेस्यात्तुवैश्यानांशूद्राना
मेकशालकं २५४ सर्वेषामेववर्णानामेकशालंप्रशस्यते एकशालन्द्विशालम्वात्रिशालन्तुर्येशालकम् २५५ पश्चालिन्दकृतंकुर्या
त्तादृक्शालाप्रशस्यते शालादिभिर्नकर्त्तव्यंनकुर्यात्तुद्रुतं निम्नक ॥ २५६ समांशालान्ततःकुर्यात्समंप्राकारमेवच कुलीरवृश्चिकौमी
नउत्तरद्वारसंस्थिताः २५७ मेषसिंहधनुर्द्धारीपूर्वद्वारेषुसंस्थिताः वृषभंमकरंकन्यायाम्यद्वारेसमाश्रिताः २५८ मिथुनंतुलकुंभौ
चपश्चिमद्वारमाश्रिताः ब्राह्मणाःक्षत्रियाःवैश्याःशूद्राश्चैवयथाक्रमं २५९ यद्दिग्राशयःप्रोक्तास्तस्मिन्शालाप्रशस्यते अथवा
पूर्वभागेतुब्राह्मणाउत्तरेन्नृपाः २६० वैश्यानांदक्षिणेभागेपश्चिमेशूद्रकास्तथा आग्नेयादिक्रमेणैवअन्त्यजावर्णसङ्कराः २६१
ज्ञातिभ्रष्टाश्चचौराश्च विदिक्याःशोभनास्मृताः ब्राह्मणाःक्षत्रियाःवैश्याःशूद्राःप्राग्वादिषुस्मृताः २६२ अष्टोत्तरशतंहस्तविस्ता
रान्नृपमन्दिरम् कार्यंप्रधानमन्यानितथाष्टाष्टानिनानितु २६३ विस्तारंपादसंयुक्तंतेषान्दैर्घ्यंप्रकल्पयेत् एवंनृपाणांपञ्चैवस्यु

णिशुभदानिव २६४ षड्भिःषड्भिर्विहीनाश्चचतुःषष्टिमितस्यच पञ्चैवतस्यविस्तारंदैर्घ्यंषड्भागसंयुतम् षष्टिश्चतुर्विहीनानिवेश्मानिस
विस्तस्यच पञ्चशाखाशसंयुक्तन्दैर्घ्यन्तस्यार्द्धमेवच २६६ नृपानाम्महिषीनाञ्चभर्तृस्तम्यञ्चचैवहि षड्भिःषड्भिश्चवर्ज्यानिश्चशी
त्याश्चतथैवच २६७ त्रिशायुतन्तद्दैर्घ्यञ्चयुवराजगृहाणिव पञ्चाशद्द्वैतस्यैवश्चातृणांप्रभवन्तिव २६८ नृपमन्त्रिगृहाणाञ्च
अन्तरेयत्प्रमाणकम् सामन्तराजपुत्राणाम्प्रवराणाङ्गृहंस्मृतम् २६९ नृपाणांयुवराजस्यगृहाणामन्तरेणयत् तद्गृहङ्कञ्चुकि
वेश्याकलाज्ञानान्तथैवच २७० युवराजमन्त्रिणान्तुप्रभवेद्द्वियदन्तरम् अध्यक्षदूतगेहन्तत्कर्मसुकुशलाश्चये २७१ अध्यक्षा
धिकृतानाञ्चरत्निकोशप्रमाणकम् चत्वारिंशच्चतुर्हीनापञ्चगेहाभवन्तिहि २७२ षड्भागसंयुतन्दैर्घ्यन्दैवज्ञभिषजान्तथा पुरो
हितानांशुभदंसर्वेषांकथयाम्यतः २७३ हस्तद्वात्रिंशतायुक्तम्विस्तारस्यद्विजालयं विस्तारसदृशांशास्तुदैर्घ्यन्तस्यप्रकल्पयेत्
२७४ त्रयाणांक्षत्रियादीनामालयंपूर्ववोदितम् नृपसेनापतिर्गेहस्यान्तरंयद्भवेदिह २७५ तत्कोशगेहंभवतिरत्निगेहन्तथैव
च सेनापतिगृहाणाञ्चअन्तरेयत्प्रमाणकम् २७६ चातुर्वर्ण्यस्ययद्गेहन्तद्राजपुरुषंमतं अथपारसवादीनांमातापित्रोर्यदन्तरं
२७७ ब्राह्मणस्यचयन्मानेशूद्रेणसहयद्भवेत् मूर्द्धावसिक्तस्तत्रासुतथैवमृतकारकः २७८ पश्चात्तश्रमिजनानाञ्चयथेष्टङ्कार
येद्गृहं शतहस्तोच्छ्रितन्तुर्यंचतुःशालङ्गृहंभवेत् २७९ प्रमितन्त्वेकशालन्तुशुभदन्तन्प्रकीर्त्तितं सेनापतिनृपादीनांसप्तत्यासहि
तेकृते २८० व्यासेचतुर्दशहृतेशालामानंविनिर्द्दिशेत् पञ्चत्रिंशहृतेन्यत्रालिन्दंमानंभवेत्ततः २८१ शालात्रिभागतुल्यावक

त्व्यावीथिकावहिः भवनात्पूर्वतोथ्योपंपश्चात्त्वापाश्वयम्भवेत् २८२ सावष्टंभंपार्श्वयोस्तुसर्वत्रसुस्थितंभवेत् विस्तारषोडशांशस्तु
चतुर्हस्तयुतस्त्वयः २८३ तदन्तरस्योच्चतरंसमाणंप्रवदेद्बुधः द्वादशभागेनोनंचसमस्तानांप्रकल्पयेत् २८४ यजन्तेराजसूयाद्यैः क्र
तुभिर्हविनीश्वराः नलैरष्टाष्टमैस्तेषांकारयेद्भवनोत्तमं २८५ तथाचसप्तमैरेवविप्राणांकारयेद्गृहम् अर्द्धषष्ठे क्षत्रियाणांवैश्यानां
मर्द्धपंचमैः २८६ त्रिभिस्सार्द्धैश्चशूद्राणांभवनंशुभदंस्मृतम् स्वगृहाणांत्रिभागेनप्रमाणमिहलक्षयेत् २८७ विस्तारायामगुणित
नलैःषोडशभिःस्मृतम् विषमाःशुभदाह्येतेसमादुःखप्रदायकाः २८८ व्यासाच्चषोडशोभागःसर्वेषांमितयःस्मृताः पक्केष्टकाकृतानां
त्वनदारूणांकदाचन २८९ नृपसेनापतिगृहमष्टाशीतिशतैर्युताः अङ्गुलानिद्वारमानम्प्रवदन्तिमनीषिणः २९० विप्रादीनांतथास
प्तविंशतिस्त्वंगुलानिच द्वारसमानंतन्मानंत्रिगुणोच्छ्रायमुच्यते २९१ उच्छ्रायहस्तसंख्यायाःपरिमाणान्यंगुलानिच शास्त्राद्वयेपिवाहुल्यं
कार्यंद्वादशसंयुतं २९२ उच्छ्रायात्सप्तगुणितादशीतिर्युतामता भागःपुनर्नवगुणाशीत्यंशस्ततएवच २९३ दशांशहीनस्स्यायःस्तंभा
नांपरिमाणकं वेदास्रोरुचकःस्तंभोवज्रोष्टास्त्रिगुणोमतः २९४ द्विवज्रःषोडशास्त्रिःस्याद्द्विगुणास्त्रिःप्रलीनकः समंतवृत्तोवृत्ताख्यःस्तंभः
श्रेष्ठोद्विजोत्तमः २९५ विभज्यनवधास्तंभंकुर्योदुद्वहनंपरं पद्मंचसोत्तरोष्टंचकुर्य्याद्भागेनभागतः २९६ स्तंभसमंवाहुल्यंभारतुल्यानामु
पर्युपासां भवतितुलायतुलानामूनंपादेनपादेन २९७ अपतिषिद्धालिंदंसमंततोवास्तुसर्वतोभद्रम् नृपविबुधसमूहानांकार्यंद्वारैश्चतुर्भिर
पि २९८ ॥ द्विशालानिगृहाणि याम्यशालांन्यसेदादौद्वितीयापश्चिमेततः तृतीयाचोत्तरेस्याप्याचतुर्थीपूर्वपश्चिमा २९९ दक्षिणेदुस्थंवत

त्वापूर्वेचखरसंज्ञकं तद्वाजाख्यम्भवेद्देहम्याजरोगप्रदस्मृतम् २०० दक्षिणेदुर्मुखंकुर्यात्पश्चिमेधान्यसंज्ञकं सिद्धार्थाख्यंद्विशालन्त्वसर्व
सिद्धिकरन्नृणां २०१ पश्चिमेधान्यनामानमुत्तरेजयसंज्ञकं यमसूर्यन्द्विशालन्तन्मृत्युदन्नात्रसंशयः २०२ पूर्वेतुखरनामानमुत्त
रेधान्यसंज्ञकं दण्डाख्यन्तद्द्विशालंस्याद्दण्डकृत्यात्पुनःपुनः २०३ दुर्मुखन्दक्षिणेकुर्यादुत्तरेजयसंज्ञकं वाताख्यंतद्द्विशालं
नुवन्धुनाशंधनक्षयम् २०४ खरन्त्वपूर्वदिग्भागेपश्चिमेधान्यसंज्ञकं गृहन्तुल्लीद्विशालन्तत्पशुवृद्धिधनप्रदम् २०५ विपक्षं
दक्षिणेभागेपश्चिमेक्रूरसंज्ञकं शोभनाख्यंद्विशालन्तद्धनधान्यकरम्परं २०६ विजयन्दक्षिणेभागेविजयंचैवपश्चिमे द्विशालन्त्वै
वकुम्भाख्यंपुत्रदारादिसंयुतं २०७ धान्यन्त्वपूर्वदिग्भागेधान्यञ्चैवतुपश्चिमे नन्दाख्यन्तद्द्विशालन्त्वधनदंशोभनंस्मृतं २०८
विजयंसर्वदिग्भागेद्विशालाख्यन्तदेवहि पाक्ष्याख्यन्नामनद्गेहंसुभदन्त्वनृणांभवेत् २०९ विपुलंसर्वदिग्भागेद्विशालन्नामजा
यते नानिसंपुटसंज्ञानिधनधान्यप्रदानिच २१० धनदंसर्वदिग्भागेसुवक्रंवामनोरमं कान्तंनामतुतद्गेहंसर्वेषांशोभनंस्मृतं २११
द्विशालानान्तुगृहानांभेदाश्चैवत्रयोदश फलपाकार्थमेतेषाम्मयामोक्तंसुविस्तरात् २१२ पूर्वेयाम्यमथयाम्यंपश्चिमेतमथोत्तरंपूर्वकं मा
कृपतीचीमथदक्षिणोत्तरम्वास्तुषड्विधमिदंद्विशालकं २१३॥ अथत्रिशालानि॥ उत्तरहीनंयत्त्रिशालन्धनधान्यदं हिरण्य
नाभनामानंराज्ञांसौख्यविवर्द्धनं २१४ प्राग्द्वारशालहीनन्तुसुक्षेत्रन्नामतद्गृहम् वृद्धिदंपुत्रपौत्राणान्धनधान्यसमृद्धिदम् २१५ या
म्यशालाविहीनन्तत्त्रिशालंचुल्लिसंज्ञकं विनाशनंधनस्यापिपुत्रपौत्रादिनाशनं २१६ प्रत्यक्शालाविहीनन्तुपक्षघ्नंनामतद्गृहं पुत्र।

णान्देषदश्चैवपरन्त्वपुरवासिनां २१७ चत्वारो मीमयाप्रोक्ता भेदाश्चैव चतुर्दश नस्माद्विचार्य कुर्वीन गृहकर्मणि कोविदः २१८ अथच
तुःशालानि अलिन्दानां त्ववच्छेदो नास्ति यत्र समन्ततः तद्वास्तु सर्वतोभद्रं चतुर्द्वारसमन्वितम् एकयामे चतुःशाले दुर्भिक्षे रा
ष्ट्रविप्लवे २१९ स्वामिनो नीयमानाया प्रतिश्रुकन्तदु थ्यति नृपाणां विबुधानां च गृहं सौख्यप्रदायकं २२० मदक्षिणान्नगैः
सर्वैः शालाभित्तिरलिन्दकैः विनापरेण द्वारेण नन्द्यावर्तमिति स्मृतं २२१ श्रेष्ठं सुमारोग्यकरं सर्वेषां शुद्धजन्मनां द्वारालिन्दौग
तस्तैकोनेत्रयोर्दक्षिणागतः २२२ विहाय दक्षिणद्वारं वर्द्धमानमिति स्मृतम् शुभदं सर्ववर्णानां वृद्धिदं पुत्रपौत्रदम् २२३ पश्चिमो
न्नतोलिन्दः प्रागन्तौ द्वौ तदुत्थितौ अन्यस्तन्मध्यविधृतः प्राग्द्वारं स्वस्तिकं शुभम् २२४ प्राक्पश्चिमावलिन्दौ यावन्तगौ तद्भवौ प
रौ सौम्यद्वारं विनान्यत्तु चकारव्यन्तु तत्स्मृतम् २२५ ॥ इति वास्तुशास्त्रे समयगृहादिनिर्माणो द्वितीयोऽध्यायः २ ॥ अथातः
संप्रवक्ष्यामि गृहकालविनिर्णयं यथाकालं शुभं ज्ञात्वा तदा भवनमारभेत् २२६ मृदुध्रुवस्वातिपुष्यधनिष्ठाद्वितये रवौ मू
ले पुनर्वसौ सौम्यवारे प्रारंभणं शुभम् २२७ आदित्यभौमवर्ज्यं तु वाराः सर्वे शुभावहाः द्वितीया च तृतीया च षष्ठी च पञ्चमी त
था २२८ सप्तमी दशमी चैव द्वादश्येकादशी तथा त्रयोदशी पञ्चदशी तिथयस्तु शुभावहाः २२९ दारिद्र्यं प्रतिपत्कुर्याच्चतुर्थी
धनहारिणी अष्टम्युच्चाटनं चैव नवमी शस्त्रघातिनी २३० दर्शे राजभयं भूते सुतदारविनाशनम् धनिष्ठापञ्चके नैव कुर्यात्स्तं
भसमुच्छ्रयं २३१ सूत्रधारं शिलान्यासं प्राकारादि समालभेत् यामित्रं द्विविधं वर्ज्यं वेधोपग्रहकर्तरि २३२ एकार्गलं तथाल

त्तासुनिञ्चकवसंज्ञकाः पातन्तुद्विविधम्वर्ज्यम्व्यतीपातश्चवैधृतिः २३३ कुलिकङ्कएटकङ्कालंयमघएटनथैवच जन्मतृतीयप
ञ्चाङ्कतारावर्न्याेनिभानिच २३४ कुयोगांवनसंज्ञन्त्वंतथात्रिस्पृकुरवलन्दिनं मापलग्नानिपापांशाःपापवर्गोस्तथैवच २३५ कु
योगास्तिथिवारोत्थास्तिथिभोत्थाभवारजाः विवाहादिषुपेवर्ज्यास्तेवर्ज्यावास्तुकर्मणि २३६ वास्तुचक्रंप्रवक्ष्यामियच्चव्या
सेनभाषितम् यस्मिन्नृक्षेस्थितोभानुःतदाद्येत्रीणिमस्तके २३७ चतुष्कमग्रपादेस्यात्पुनश्चत्वारिपश्चिमे पृष्ठेचत्रीणिऋ
क्षाणिकुक्षौचत्वारिवामतः २३८ पुच्छेभत्रयमेवस्युरष्टाविंशतितारकाः शिरस्थाग्निदाहायगृहोद्वासोग्रपादयोः २३९ स्थै
र्यन्स्यात्पश्चिमेपादेपृष्ठेचैवंधनागमः कुक्षौस्याद्दक्षिणेलाभःपुच्छेचस्वामिनाशनं २४० वामकुक्षौचदारिद्र्यम्मुखेपीडा
निरन्तरं पुनर्वसौनृपादीनाङ्कुर्व्यंसूतिकागृहं २४१ श्रवणाभिजितोर्मध्येप्रवेशन्नकारयेत् चरलग्नेचरांशेचसर्वथापरिवर्ज
येत् २४२ जन्मभाच्चोपचयभेलग्नेवर्गेतथैवच प्रारम्भणंप्रकुर्वीतनैधनंपरिवर्जयेत् २४३ पापैस्त्रिषष्ठायगतैःसौम्यैःकेन्द्र
त्रिकोणगैः निर्माणङ्कारयेद्धीमान्नष्टमस्थैःखलैर्मृतिः २४४ मनुष्यलग्नेसौम्यानान्नृम्योगेयोगतस्तथा कुम्भम्विहायान्यत
रेलग्नेसौम्यग्रहान्विते २४५ जलाशयादिवास्तूनांप्रारम्भःशुभदःस्मृतः २४६॥ अथयोगाः॥ गुरुर्लग्नेरविःषष्ठेद्यूनेसौ
म्येसुखेसिते तृतीयस्थेर्केपुत्रेत्रतद्गृहंशतमायुषं २४७ भृगुर्लग्नेंवरेसौम्येलाभस्थानेचभास्करे गुरुर्केन्द्रगतोयत्रशतवर्षाणितिष्ठ
ति २४८ हिबुकेज्येंवरेचन्द्रेलाभेचकुजभास्करौ प्रारंभःक्रियतेयस्यअशीत्यायुःक्रमाद्भवेत् २४९ लग्नेभृगौपुत्रगेज्येषष्ठेभौम

तृतीयगे खेौपस्वगृहारम्भेसवतिष्ठेच्छतद्वयम् ३५० लग्नस्थोगुरुशुक्रौच रिपुराशिगतेकुजे सूर्येलाभगतेयस्यद्विशतान्यनितिष्ठ
ति ३५१ स्वोच्चस्थोवाभृगुर्लग्नेस्वोच्चेजीवेसुखस्थिते स्वोच्चेलाभगतेमन्देसहस्राणंसमास्थितिः ३५२ स्वोच्चेस्वभवनेसौम्यैर्लग्नस्थे
वोपिकेन्द्रगैः प्रारम्भःक्रियतेयस्यशतद्वयंसतिष्ठति ३५३ कर्केलग्नगतेचन्द्रेकेन्द्रस्थानेचवाक्पतिः मित्रस्वोच्चस्थितैःखेटैर्ल
क्ष्मीतस्यचिरम्भवेत् ३५४ इन्द्राग्निरात्रयाहीन्दुविष्णुधातृजलोडुषु वरुणासहितेष्वेषुकृतगृहंश्रियापुतं ३५५ द्विदैवत्वाष्ट्र
वारीशरुद्रादितिवसूडुषु शुक्रेणसहितेष्वेषुकृतन्धान्यप्रदंगृहम् ३५६ हस्तार्यमत्वाष्ट्रदस्रचानुराधोडुभेषुच बुधेनसहिते
ष्वेषुधनपुत्रसुखप्रदम् ३५७॥ कुयोगाः॥ शत्रुक्षेत्रगतैःखेटैर्नीचस्थैर्वापराजितैः प्रारम्भेयस्यभवनेलक्ष्मीतस्यविनश्यति
३५८ एकोपिपरभागस्थोदशमेसप्तमेपिवा वर्णाधिपवलैर्हीनेतद्गृहम्परहस्तगं ३५९ पापान्तरगतेलग्नेमन्वसौम्ययुतेक्षिते अ
ष्टमस्थेऽकेपुत्रेचअशीत्यव्दाद्विहन्यते ३६१ मन्देलग्नगतेचैवकुजेसप्तमसंस्थिते शुभैरवीक्षितेवापिशतवर्षाणिहन्यते ३६२
लग्नगेशशिनिक्षीणेमृत्युस्थानेचभूसुते प्रारम्भःक्रियतेयस्यशीघ्रन्तद्विविनश्यति ३६३ दशापतौवलैर्हीनेवर्णनाथेतथैवच पी
डितर्क्षगतेसूर्येनविदध्यात्कदाचन ३६४ पितृमूलेज्यभाग्यार्कपौष्णाभेषुचयत्कृतं ३६५ कुजेनसंहितेष्वेषुगृहंसन्दह्यतेग्निना
३६६ मूलत्त्वेरेवतीचैवकृत्तिकाषाढमेवच पूर्वाफाल्गुनिहस्तेचमघाचैवतुसप्तकं ३६७ एषुभौमेनयुक्तेषुवारेतस्यैववेश्मयत्
अग्निनादह्यतेक्षत्रंपुनःनाशंप्रजायते ३६८ अग्निनक्षत्रगेसूर्येचन्द्रेवानत्रसंस्थिते निर्मितम्मन्दिरन्नूनमग्निनादह्यतेचिरात्

हीने गजवाजिधरित्रीणाङ्क्षमाद्याभम्विनिर्दिशेत् ३८५ भास्करेकीर्निभङ्गःस्यात्कुजेविपदमादिशेत् हिमगौक्लेशःक्रायासःपतङ्गे
व्यङ्गताभयम् ३८६ नैधनेचसहस्रांशौ विद्विषोजनितापदः हानिःशीतमयूखेच भौमेसौरेचरुग्भयं ३८७ बुधेमानधनप्राप्तिर्जी
वेचविजयोभवेत् शुक्रेस्वजनभेदःस्यान्मन्त्रजस्यापिदेहिनः ३८८ वागीशेनवमस्थानेविद्याभोगादिनन्दनं बुधेविविधभो-
गानिजीवेचविजयोभवेत् ३८९ चन्द्रेधानुक्षयःप्रोक्तोधर्महानिश्चभास्करे कुजेचार्यक्षयोविद्याद्विजेधर्मंमुत्रंवरं ३९० दश
मस्थानगेशुक्रेप्राप्यमानाप्नसिद्धयः सुराचार्येमहत्सौख्यम्विजयंस्त्रीधनम्बुधे ३९१ मार्तण्डेवसुवृद्धिश्चन्द्रेशोकविवर्द्धनं भौ
मेस्त्रागमःप्रोक्तःकोणेकीर्तिविलोपनं ३९२ लाभस्थानेषुसर्वेषुलाभस्थानम्विनिर्दिशेत् व्ययस्थानेषुसर्वेषुविनिर्दिशेद्व्ययः
सदा ३९३ स्वोच्चेपूर्णफलःप्रोक्तःपादोनंस्वर्क्षगोग्रहः स्वत्रिकोणेर्द्धफलदःपादम्मित्रगृहाश्रितः ३९४ समर्क्षेरिपुराश्योश्चसम
कष्टफलौग्रहौ नीचस्थोनिष्फलःप्रोक्तोवर्गेसत्फलदःशुभः ३९५॥ इतिवास्तुशास्त्रेतृतीयोऽध्यायः ३॥ चतुर्दशविधाप्रो
क्ताःशय्याश्चोत्तममध्यमाः निन्दिताश्चप्रमाणञ्चकथयामिसमासतः ३९६ शयनन्द्विविधंप्रोक्तंशरीरन्तुपृथग्विधं शरीरन्तुप्र
हत्तामशय्याशयनचक्रके ३९७ शय्यामानंस्वदेहेनसमङ्गुलयंतुखेषुना सकाशीत्यङ्गुलाशय्यांनवत्यङ्गुलसम्मिता ३९८
तदर्द्धेनचविस्तीर्णाम्पादुकौतुषडङ्गुलौ आसनन्तुप्रकर्त्तव्यंशय्याविस्तारमानकम् ३९९ विस्तारंपादहीनन्तुतद्विस्तारंप्रकल्प
येत् उपानहौप्रकर्त्तव्यौस्वपादप्रमितौतथा ४०० पादुकेनतथाकार्येअन्यथाङ्गःखशोकदौ अष्टाङ्गुलेनमानेनशय्यामानं

प्रकल्पयेत् ४०१ अथवाप्यपरप्रोक्तानृपाणाङ्कुम्भमिष्यतां शताङ्कुलान्यमाणान्तुमहतीपरिकीर्त्तिता ४०२ कुमाराणान्तुनवतिः सा
षड्भूनान्तुमन्त्रिणां साद्धादशोनावलयपर्य्यङ्कोपरिकल्पिता ४०३ सुरेन्द्रिणानान्त्वतयाहीनाधृत्यङ्कुलैस्ततः अर्द्धेनतोष्टसप्तहीनं
विष्टम्भःपरिकीर्त्तितः ४०४ आयामास्त्र्यंशमानन्तुपादोच्छ्रायन्तुनिर्दिशेत् सर्वेषाञ्चैववर्णानामेकाशीतिमितास्मृता ४०५ सामन्ता
नान्तुनवतिःसैकाशीतिमितातथा स्वदेहान्नानिदीर्घासा नविस्ताराणैवच ४०६ हीनारोगभयादीर्घाद्दुःखदासुखदासमा प
षाणैर्निर्मितंयत्तुनकुर्य्यान्मन्दिरंस्मृतं ४०७ पक्वेष्टकमयास्तुनामभवनंहितमुत्तमम् अनिष्टकैःसुमनन्तुसुधारङ्कुर्दमेनतु ४०८ मान
स्यम्बद्धितंकाष्ठैर्वैनैश्चचत्वरंस्मृतं वल्लैश्चविजयंप्रोक्तंराज्ञांशिल्पिविकल्पितं ४०९ कालमेतिचविज्ञेयमष्टमंनृपराजानिभिः उत्त
मानिचचत्वारिगृहाणिगृहमेधिनां ४१० सौवर्णंराजतंताम्रमायसंचप्रकीर्त्तितं सौवर्णन्तुकरन्नामराजतंश्रीभवन्तथा ४११
ताम्रेणसूर्य्यमच्चन्तुचण्डनामतथायसं देवदानवगन्धर्वयक्षराक्षसपन्नगाः ४१२ द्वादशैतेप्रकारास्तुगृहाणांनियताःस्मृता
जानुधुंत्वविलंनामप्रायुवंवारिवन्धकं ४१३ एवंसर्वासुजातीषुगृहाणिचचतुर्दश चत्वारश्चोत्तमायेचतेगृहावर्णपूर्वकाः ४१४
शुभदाब्राह्मणादीनांसर्वेषामपिशोभनाः उत्तमाःशुद्धकालेषुस्थाप्याःशुद्धविधानतः ४१५ काष्ठादिकृतगेहेषुकालापेक्षांनकार
येत् तृणदारुमयारम्भेविकल्पंनैवकारयेत् सौवर्णादिगृहारंभेमासदोषोनविद्यते पञ्चाङ्गशुद्धकालेतुनचैत्रसिंहपौषके ४१७
प्रवेशनञ्चकर्त्तव्यंमहोत्सवदिनेतथा पक्वेष्टकानिर्मितेतुशिल्पमानम्प्रवक्ष्यते ४१८ काष्ठादिनिर्मितेगेहेस्तंभमानंप्रवक्ष्यते सौवर्णा

दिकेहस्तमानंयानुपादेनकिञ्चन ४१९ पादुकोपानहौकार्य्यौअङ्गुलस्यप्रमाणतः मञ्चादिकञ्चासनञ्चअङ्गुलेनैवकारयेत् ४२०
प्रतिमापीठिकाचापिलिङ्गस्थानस्तम्भमेववा गवाक्षाणांप्रमाणञ्चशिलामानन्तथैवच ४२१ खड्गचर्मायुधादीनांप्रमाणञ्चाङ्गुल
निच विषमाश्शुभदाःपुंसांसमाःसौख्यविनाशकाः ४२२ अङ्गुलस्यप्रमाणन्तुकथयामिसमासतः नवाष्टसप्तषट्पूर्वाङ्गुल
परिकीर्त्तिताः ४२३ त्रिविधस्यापिहस्तस्यप्रत्येकङ्कर्मदर्शितम् ग्रामखेटपुरादीनांविभागोयमविस्तरात् ४२४ परिखाद्वार
ध्याश्चस्तम्भाःप्रासादवेश्मनाम् तेषान्निर्गममार्गंचसीमानेत्रान्तराणिच ४२५ दिगन्तरविभागाश्चवल्मीकोधर्णयोस्तथा अध
नःपरिमाणंचक्रोशगव्यूतियोजनैः ४२६ खातककचरशौचप्रासादापनमापनम् नवयावाङ्गुलेहस्तेनस्यमानंप्रचक्षते ४२७
आयोधनानिचर्माणितथाचंडायुधानिच वापीकूपप्रमाणानितथाचगजवाजिनां ४२८ इक्षुयंत्रारघट्टाश्चहलयूपयुगध्वजां
सनोयानिचनावश्चशिल्पिनामप्युपस्करं ४२९ पादुकेवट्शौक्छत्रंधर्मोद्यानानिचैवहि मात्राष्टयेवहस्तेननचदंडाश्चमापयेत्
४३० जालन्धरेहस्तसंख्यावेधेचदंडकास्तथा मध्यदेशेक्रोशसंख्याद्वीपान्तरेतुयोजनं ४३१ चतुर्विंशत्यङ्गुलैस्तुहस्तमानंप्रच
क्षते चतुर्हस्तोभवेद्दण्डःक्रोशस्तद्द्विसहस्रकं ४३२ चतुःक्रोशंयोजनन्तुवंशोदशकैर्मितः निवर्तनन्त्रिंशतिकैःक्षेत्रंतच्चचतुष्करैः
४३३ प्रतिवेश्मनिदेशाश्चगृहादीनान्निवर्तनं एकाशीतिपदेनैवसर्वेस्थानंचमापयेत् ४३४ प्रासादाद्द्विविधाप्रोक्ताश्चलाःस्थिरा
स्तथा मण्डपाश्चचतुष्षष्टिःप्राकारादेवनाम्नयाः ४३५ विशेषेणापियेक्षात्रातथायेचाष्टमण्डपाः चतुष्षष्टिपदेनैवसर्वानेनाम्न

त्रैः स्नानार्थमानीय मुनीर्थेनोयन्तोपहारैः प्रतिपूज्य कुम्भम् ४५० ध्रुवे शिलायास्तु ततः खनित्वा कुंभं निधाप्य प्रयताद्दलीयं विप्राद्विवर्णा
नुगतः प्रशस्तलग्ने हेमानन्तु तद्देमानम् ४५१ जलाशयाद्वीहिसपञ्चगव्यमध्वाज्यजातं परिपूर्य सम्यक् ॥ शिलाविन्यासकालेतु
संभारांश्चोपकल्पयेत् ४५२ समुद्रयानिरत्नानि सुवर्णरजतन्तथा सर्वबीजानि गन्धाश्च यवा दर्भास्तथैव च ४५३ स्रक्चन्दनं सुमनसः
सर्पिः क्षीरं च मधुरोचनाः आमिषञ्च तथा मद्यं फलानि विविधानि च ४५४ नैवेद्यार्थं च पक्वान्नं वस्त्राण्याभरणानि च [illegible]
नथास्त्रद्रव्याण्यनुक्रमेण च ४५५ गन्धादींश्चैव वस्त्राणि उष्ण्याणि च तथैव च वास्तुविद्याविधानज्ञैः कार्यं तत्तु समाहितैः ४५६ ॥
इति वास्तुशास्त्रे गृहादिनिर्माणे चतुर्थोऽध्यायः ४ ॥ प्रोक्तं यद्भवनारम्भकर्मादीनां यथाक्रमं अधुना श्रोतुमिच्छामि वास्तुदेहस्य
लक्षणम् ४५७ पुरा स भगवान्वास्तुपुरुषः परिकीर्तितः सर्वोत्तरमुखो वास्तुपुरुषः परिकल्पितः ४५८ देवैः सेन्द्रादिभिस्तस्मिन्काले
भूमौ निपातितः अवाङ्मुखे निपतित ईशान्यां दिशि संस्थितः ४५९ शिरोभागे स्थितो वह्निमुखेऽप्यापस्तनेऽर्यमः उत्तरस्यापवत्सश्च
सव्यमार्गसमाश्रितः ४६० पर्जन्याद्यास्तथा नासा दृक्श्रवोरस्थलाः समाः सत्राद्याः पंच च भुजे विन्यस्य पुरुषोत्तमे ४६१ हस्ते सविता
सावित्रो वितथो यमहृत्स्थितः पार्श्वे जठरे विवस्वांश्च स्थितः परितः सदा ४६२ ऊरू जानु जङ्घे स्फिक् यमाद्यैः परिवेष्टितः एतद्दक्षि
णपार्श्वस्था वामपार्श्वे तथैव च ४६३ मेषादण्डजयन्तौ च पदे ब्रह्मा हृदि स्थितः पादे समाश्रिताद्दनिपितृभिः परिवारितः चत्वारिंशत्पंच
युक्ताः परितो ब्रह्मणस्तथा ४६४ चतुःषष्टिपदे वास्तौ देवा ब्रह्मादयस्तथा कोणेनेषां प्रकर्तव्या स्तिर्यक्कोष्ठगता द्विजाः ४६५ चतुःषष्टिप

वि॰ प्र॰ १५

दोवास्तुःप्रासादेवद्वाणस्मृतः ब्रह्माचतुष्पदोह्यत्रकोणाद्यर्द्धपदाःस्मृताः ४६६ षोडशकोणगांसार्द्धपदास्तथायोभयस्थिताः विंशतिर्द्विपदाश्चै
वचतुःषष्टिपदेस्मृताः ४६७ जीर्णोद्धारेतथोद्यानेतथागृहनिवेशने नवप्रासादभवनेप्रासादपरिवर्त्तने ४६८ द्वाराभिवर्त्तनेतद्वत्प्रासादे
षुगृहेषुच वास्तूपशमनंकुर्यात्पूर्वमेवविचक्षणः ४६९ वास्तुमण्डलकोणेषुदृश्यमानाद्विक्रमेणच शङ्कून्संरोपणंशस्तंप्रासादृक्षिप्रे
नमार्गतः ४७० विंशत्तुभुज्जलेनागालोकपालाश्चसर्वशः अस्मिन्गृहेवतिष्टन्तुआयुर्बलकराःसदा ४७१ प्रासादारामवापीषुकू
पोद्यानेषुचैवहि तन्नामपूर्विकारोप्याकोणेशङ्कुचतुष्टयं ४७२ अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः तेभ्योवलिम्प्रयच्छा
मिपुण्यमोदनमुत्तमम् ४७३ एकाशीतिपदङ्कुर्य्याद्रेखाभिःकनकेनच पश्चात्पिष्टेनचालिख्यसूत्रेणालोड्यसर्वतः ४७४ दशपूर्वा
यतारेखादशचैवोत्तरायता सर्ववास्तुविभागेषुविज्ञेयानवकानव ४७५ शान्तायशोवतीकान्ताविशालाप्राणवाहिनी सतीचसुम
नानन्दासुभद्रासुस्थितातथा ४७६ पूर्वापरागताह्येताउदग्याम्याश्रितास्तथा हिरण्यासुव्रतालक्ष्मीर्विभूतिर्विमलाप्रिया ४७७ ज
याकालाविशोकाचतथेन्द्राद्दशमीस्मृता एकाशीतिपदेह्येताःशिराश्चपरिकीर्त्तिताः ४७८ प्रियायशोविनीकान्तासुप्रियाविपराशिवा
सुशोभासधनाज्ञेयातथेभानवमीस्मृता ४७९ पूर्वापरास्तथाह्येताश्चतुष्षष्टिपदेस्थिताः धन्याधराविशालाचस्थिरारूपामतानिशा
४८० विभवाप्रभवाचान्यासौम्यासौम्याश्रिताःशिराः पदस्याष्टांशकोभागस्तत्रोनांकर्मसंज्ञकं ४८१ पदहस्तसंख्ययासम्मितानिवे
शांगुलानि विस्तीर्णवंशव्यासोर्द्धशिरामानंप्रचक्षते ४८२ संयातास्त्रापिवंशानांमध्यमानिसमानिच पदानांपानितान्विन्द्यात्सर्वा

रामः १५

णिभयदान्यपि ४८३ ननानिपीडयेन्माह्नोग्रुचिभाण्डैश्चकीलकैः संभैश्चशल्यदोषैश्चगृहस्वामिषुपीडनं ४८४ नस्मिन्नवयवेतस्य
वधाच्चैवप्रजायते कण्डूयमेयदङ्गम्वागृहस्वामीतथैवच ४८५ होमकालेचयज्ञादौतथाभूमिपरीक्षणे अग्नेर्वाविकृतिर्यत्रतत्र
शल्यम्विनिर्दिशेत् ४८६ धनहानिर्दाहमयेपशुपीडास्थिसंभवे रोगस्यापिभयम्प्रोक्तन्नागदन्तोपिदूषकः ४८७ वंशानीम
निवस्थानमिवहूनपिष्टयक्पृथक् वायुंयावन्नयारोगान्पितृभ्यःशिष्यतस्तथा ४८८ मुख्याद्भूपालेभ्याशोकादितिपर्यावदेवतु
सुग्रीवाददितिंयावद्भल्लाटनन्यमेवच ४८९ एतेवंशाःसमाख्याताःक्वचिद्दुर्जयएवतु एतेषांयस्तुसंपातःपदमध्येसमन्ततः
४९० एतन्मर्मेतिसमाख्यातंत्रिशूलकोणकन्तथा स्तम्भन्यासेषुवर्ज्यानितुलांवन्धेषुसर्वदा ४९१ सर्वत्रवास्तुनिर्दिष्टःपितृवैश्व
नरापतः स्फाशीतिपदेह्यस्मिन्देवतास्थापनेश्रृणु ४९२ रेखाणाञ्चफलन्तत्रकथयामिसमासतः वर्णानुपूर्वेणतथाम्बुस्प
र्शनकंपरं ४९३ विप्रःस्पृष्ट्वातथाशीर्षक्षत्रःस्त्रियकस्तथा विप्रश्चोरूवक्षुद्रांश्चपादौस्पृष्ट्वासमारभेत् ४९४ अङ्गुष्ठकेनवाकु
र्यात्मध्याङ्गुल्यातथैवच प्रदेशिन्यामपितथास्वर्णरौप्यादिधातुना ४९५ मणिनाकुसुमैर्वापितथादध्यक्षतैःफलैः शस्त्रेणघतु
नोमृत्युर्वन्धोलोहेनभस्मना ४९६ अग्नेर्भयन्तृणेनापिकाष्ठादिलिखितेनच नृपाद्भयन्तथावक्रेखण्डेशत्रुभयम्भवेत् ४९७ विस्व
पाचर्मदन्तेनाङ्गारेणास्थिनापिवा नशिवायभवेद्रेखास्वामिनोमरणन्तथा ४९८ अपसव्यक्रमेवैरंसव्येसंपदमादिशेत् तस्मिन्क
र्मेसमारंभेस्तुतन्निष्ठीवितन्तथा ४९९ वाचस्तुपरुषास्तत्रयेचान्येशकुनाधमाः तान्विवर्ज्यप्रकुर्वीतवास्तुपूजनकर्मणि ५०० अ

वि० प्र० १६

कचटतपयशदतिनवदिक्षु च प्राचीप्रभृतिषु वर्णास्तत्परङ्कारयेत्फलम् ५०१ एतेवर्णाप्रश्नकालेमध्येपद्यैकमक्षरं तेनशल्यम्विजानीया
द्दिशितस्यांचवेश्मनः ५०२ एतेभ्योपरमथाह्नेयश्चंपद्यक्षरंभवेत् तदाशल्यंनजानीयाद्गृहमध्येविनिश्चयः ५०३ एकाशीतिपदंकु
र्याद्वास्तुवित्सर्ववास्तुषु आदौसम्पूज्यगणपन्दिक्पालान्पूजयेत्ततः ५०४ धरित्रीकलशंस्थाप्यमातृकापूजयेत्ततः नान्दीश्रा
द्धंततःकुर्याद्वास्तुरथानभ्यर्चयेत्ततः ५०५ अग्निसंस्थापनार्थन्तुमेखलात्रयसंयुतं कुण्डंकुर्याद्विधानेनयोन्याकारम्विशेषतः
५०६ स्थण्डिलम्वाथकुर्वीतमतिमान्सर्वकर्मसु पदस्थान्पूजयेत्सर्वान्पञ्चत्रिंशत्तथैवच ५०७ शिखाचैकपदंप्रोक्तःपर्जन्य
स्तथैवच जयन्तोद्विपदःसूर्यःसत्यंभृशोद्विकोष्ठकौ ५०८ पदैकमन्तरिक्षस्तुवायुश्चैकपदःस्मृतः ५०९ पूषाचैकपदोह्यस्मि
न्द्विपदोवितथस्तथा द्विपदौदक्षिणाशास्थौगृहक्षतयमावुभौ ५१० गन्धर्वमृगराजौतुद्विपदौपरिकीर्तितौ मृगःपितृगणश्चैव
दौवारिकश्चैकपादकः ५११ सुग्रीवःपुष्पदन्तौचद्विपदोवरुणस्तथा असुरश्चतथाशोकोद्विपदाःपरिकीर्तिताः ५१२ पापरोगस्तथासर्प
स्त्रयश्चैकपदामताः मुख्यभल्लाटसोमाख्यास्त्रिपदास्तुत्रयःस्मृताः ५१३ सर्पश्चद्विपदःप्रोक्तस्त्वदितिश्चतथैवच द्वितिश्चैकपदाःप्रो
क्ताद्वात्रिंशद्बाह्यतस्थिताः ५१४ ईशानादिचतुष्कोणेसंस्थितान्पूजयेद्बुधः आपश्चैवायसावित्रोजयोरुद्रस्तथैवच ५१५ तदन्तगा
श्चैकपदानीशानादिषुविन्यसेत् अर्यमात्रिपदःपूर्वेसविताचतथैकपात् ५१६ विवस्वान्त्रिपदोयाम्येइन्द्रश्चैकपदस्तथा नैरृतेपश्चि
मेमित्रस्त्रिपदःपरिकीर्तितः ५१७ वायव्येराजयक्ष्माचएकपादःप्रकीर्तितः उत्तरेत्रिपदःपृथ्वीधरश्चैकपात्तथा ५१८ मध्येनव

पद्मो ब्रह्मा पीतश्चैव चतुर्भुजः आब्रह्मन्ब्राह्मण इति मन्त्रोयं समुदाहृतः ५१९ अर्यमा कृष्णवर्णश्च अर्यमणं बृहस्पतिः सविता र
क्तवर्णस्तु उपयामगृहीतकं ५२० विवस्वान्शुक्लवर्णश्च विवस्वानादित्यमन्त्रतः इन्द्रो रक्तेन्द्रसुत्रामा मन्त्रोयं समुदाहृतः ५२१
मित्रः श्वेतश्च तन्मित्रं वरुणस्याभिचक्षेदेति राजयक्ष्मा रक्तवर्णोऽभिगोत्राणि मन्त्रतः ५२२ पृथ्वीधरो रक्तवर्णः पृथिवीछन्द मन्त्रतः
आपवत्सः शुक्लवर्णो भयामेति च मन्त्रतः ५२३ आपः शुक्लवर्णश्च तद्वाहो आपो अस्मान्मातरेति च सावित्राग्नेयदिग्भागे शुक्लवर्णौ
कपातथा ५२४ उपयामगृहीतोसि सावित्रोसीति मन्त्रतः जयन्तश्वेतो नैऋत्ये मर्मोणि नेति मन्त्रतः ५२५ रुद्रो रक्तश्च वायव्ये सु
त्रामा इति मन्त्रतः ईशाने रक्तवर्णश्च तमीशानेति वै शिखी ५२६ पर्जन्यः पीतवर्णश्च महाइन्द्रेति वै तथा जयन्तः पीतवर्णश्च ध
न्वनामा इति स्मृतः ५२७ कुलिशायुधः पीतवर्णो महाइन्द्रेति वै तथा सूर्यो रक्तः सूर्यरश्मिर्हरिकेति च मन्त्रतः ५२८ सत्यश्च शुक्लो
व्रतेन दीक्षामाप्नोति मन्त्रतः भृशः कृष्णो मंत्रमस्य भद्रं कर्णेति रेव च ५२९ अन्तरिक्षः कृष्णवर्णो वयं सोमश्च इत्यपि वायुधूम्रस्तथा व
र्णो आ काया योरिति मन्त्रतः ५३० पूषा वरक्तवर्णश्च पूषन्तव इतीरितः शुक्लवर्णश्च वितथः सविता प्रथमेति च ५३१ गृहक्षतः पीतवर्णः स
विता त्वेति मन्त्रतः यमः कृष्णवपुर्योऽस्य यमाय त्वा मखाय च ५३२ गन्धर्वो रक्तवर्णश्च मन्द्रावेति मन्त्रतः भृङ्गराजः कृष्णवर्णो मृत्यु
सुपर्णेति वा तथा ५३३ मृगः पीतश्च तद्विष्णुः मन्त्रेण निर्ऋतिः स्थितः पितृगणा रक्तवर्णाः पितृभ्येति च पूजयेत् ५३४ दौवारिको रक्त
वर्णो द्रविणोदाः पिपीषति शुक्लवर्णश्च सुग्रीवः सुषुम्णः सूर्यरश्मिना ५३५ पुष्पदन्तो रक्तवर्णो नमस्ते भ्येति मन्त्रतः वरुणः शुक्ल

हृतो मित्रास्य वरुणास्तत: ५३६ आसुर: पीतरक्तश्च येरूपाणीति मन्त्रत: शोक: कृष्णवपुर्मन्त्रमासके वा हृत्या वाहयेद् ५३७ पापयक्ष्मा पीतव
र्णः सूर्यरश्मीति मन्त्रत: रक्तवर्णस्तथा रोगो ग्निमेमेदुनि कोणके ५३८ द्विपदो द्विर्वायुकोणे रक्तो नमोस्तु सर्पेभ्यश्च मुख्योरक्तवपु:
कार्योद्वेलाद्धनि पूजयेत् ५३९ भल्लाटक: कृष्णवर्णो विरामहा असि मन्त्रत: सोम: श्वेतश्चोत्तरे च वयं सोमेति मन्त्रत: ५४० सर्प: कृष्णव
पु: पूज्य उदुत्यं जातवेदसं अदितिर्पीतवर्णा तु अनोद्दिवेद्धय मन्त्रत: ५४१ दितिपीता अदितिर्द्यौ मन्त्रेणेशानकोणके ईशानादिक्रमेणैव
स्याप्या: पूज्या: स्वमन्त्रत: ५४२ नाममन्त्रेण वास्याप्या: पूज्याश्चैव यथाक्रमात् भूर्भुव: स्वेति मन्त्रेण प्रणवाद्येन नामकै: ५४३ ईशानेवर
कीस्याप्या धूम्रवर्णा यवाद्वगा: ईशावास्येति मन्त्रेण स्याप्या: पूज्या: प्रयत्नत: ५४४ विदारिका रक्तवर्णा अग्निदूतेति मन्त्रत: पूतना
पीतहरिता नम: स्वन्याय मंत्रत: ५४५ पापराक्षसी कृष्णाभा वायव्येरिति मन्त्रत: वह्निरेव चतुर्वा दिक्क्रमेणार्चनं तोर्चयेत् ५४६ रक्तकृष्ण
स्कंधघटी अहोत्र मय मंत्रत: अर्यमा दक्षिणे कृष्ण अर्यम्णा च वृहस्पति: ५४७ पश्चिमे रक्तवर्णस्तु जंभक: परिकीर्तित: सरोभ्यो धैरवं मंत्रसम्
चार्यमपूजयेत् ५४८ पिलिपिच्छिक: पीतवर्णो कारं ममरेति मंत्रत: भीमरूपस्त्वयेशाने यमाय त्वेति रक्तक: ५४९ त्रिपुरारि कृष्णवर्णो त्र्यंबकेत्वग्निको
णके अग्निजिह्वस्तु नैरृत्ये असुत्वं त्वेति पीतक: ५५० कराला रक्तवर्णा तु वानो वलरुणा स्थिता: हेतुक: पूर्वदिक् कृष्णो हेमनेनऋतुना तया ५५१
अग्निवेतालके याम्ये कृष्णोग्निं दूतइत्यपि कालाख्य: पश्चिमे कृष्णो वरुणस्योत्तंभनं तया ५५२ एकपाद: पीतवर्ण: कुविदागेति चोत्तरे ई
शानपूर्वयोर्मध्ये गन्धमाल्यश्च पीतक: ५५३ मन्थदारेति मन्त्रेण पूज्यमानोन्तरिक्षके नैरृत्याम्बुद्धिमध्यस्थो ज्वालास्य: श्वेतस्

पश्चात् ५५४ महीद्यौरिति मन्त्रेण पूजनीयो विधानतः ये वास्तुदेवताः प्रोक्ताः प्रासादेतान्प्रपूजयेत् ५५५ दुर्गदेवालये चैव शल्योद्धा
रे तथैव च विशेषेणैव पूज्याश्च चतुष्षष्टिपदं तथा ५५६ कलशं स्थापयेद्देवं वरुणं वरुणो ततः कलशम्पूरयेत्तीर्थवारिणा सर्व
वीजकैः ५५७ सर्वौषधैः सर्वरत्नगन्धैश्च विविधैस्तथा पल्लवैः पञ्चकाषायैर्मृदा शुद्धोदकेन वा ५५८ ग्रहाणाम्पूजनन्तत्र का
येद्वेदिकोपरि मुरामासीवचाकुष्टं शैलेयं रजनीद्वयं ५५९ शटीचम्पकमुस्ता च सर्वौषधिगणाः स्मृताः अश्वत्थोदुम्बरप्लक्षचूत
न्यग्रोधसम्भवाः ५६० पञ्चभङ्गा इमे प्रोक्ताः सर्वकर्मसु शोभनाः तुलसी सहदेवी च विष्णुक्रान्ता शतावरी ५६१ मूलान्येतानि
गृह्णीयाच्छतालाभे विशेषतः वटीर्वटोदुम्बरस्य वेतसस्य तथैव च ५६२ अश्वत्थश्चैव मूलस्य पञ्चकाषायकाः स्मृताः अश्व
स्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ५६३ राजद्वारप्रवेशाच्च मृदमानीय निक्षिपेत् सर्वे समुद्राः सरितः सरांसि जलदान
दाः ५६४ आपान्तु यजमानस्य दुरितक्षयकारकाः ५६५ पृथिव्यादिं पञ्चचत्वारिंशद्देवाननन्तरपूजयेत् ५६६ वेदमन्त्रैर्नाममन्त्रैः प्रण
वव्याहृतिभिस्तथा होमस्त्रिमेखले कार्यः कुण्डे हस्तप्रमाणके ५६७ यवैः कृष्णतिलैस्तद्वत्समिद्भिः क्षीरवृक्षकैः पलाशैः खदि
रैर्वापामार्गोदुम्बरसम्भवैः ५६८ कुशदूर्वामयैर्वापि मधुसर्पिसमन्वितैः कार्यस्तु पञ्चभिर्विल्वैर्विल्ववीजैरथापि वा ५६९ हो
मान्ते भक्ष्यभोज्यैश्च वास्तुदेशे वलिं हरेत् नमस्कारान्तयुक्तेन प्रणवाद्येन सर्वतः ५७० वेदोक्तेनैव मन्त्रेण सम्पूज्या देवताः क्रमात् त
तो व्याहृतिभिर्होमः स्विष्टकृद्धोममेव च ५७१ पूर्णाहुतिञ्च जुहुयात्संस्रवप्राशनन्ततः वास्तुमण्डलदेवेभ्यो वलिन्दद्याद्विधानतः

वि॰ प्र॰ १८

५७२ घृतान्नं शिखिने स्यात्पर्जन्याय सचोत्पलं जयन्ताय यवान्नं मण्डलदेवेभ्यो बलिन्ततः ५७३ कुलिशायुधाय प्रस्थं रत्नपौष्टिकको
शं सूर्याय धूम्ररक्तवितानापूपसक्तवैः ५७४ सत्याय घृतगोधूमं मत्स्यान्नं च भृशाय च अन्तरिक्षाय शष्कुलीमांसं वापि च शाकुनम्
५७५ वायसे सक्तवः प्रोक्ताः पूष्णे लाजास्तु नावुधैः वितथाय चणकान्नम्मध्वन्नं च गृहक्षते यमाय पिशितान्नन्तु गन्धर्वाय गन्धो
दनं भृङ्गराजाय मेषस्य जिह्वा माषबलिं हरेत् ५७७ मृगाय यावकं दद्याद्बलिं नीलपटं तथा पितृभ्यः कृशरान्नं च तथा दौवा
रिकाय च ५७८ दन्तकाष्ठं कृष्णापिष्टं दन्तधावनमेव च सुग्रीवाय अपूपं च यावकन्तु तथैव च ५७९ पुष्पदन्ताय पायसम्वरुणा
य तथैव च कुशस्तम्भं च यमं च पैष्टं हैरण्यमयं तथा ५८० असुराय सुरा प्रोक्ता शोषाय पच घृतोदनं गोधायापयक्ष्मणे च रोगाय घृ
तमोदनम् ५८१ अहये फलपुष्पाणि नागकेशरदूर्वापि मुख्याय घृतगोधूमं भल्लाटे मुद्गमोदनं ५८२ सोमाय पायसं घृतं नागे पौष्टि
कशालकं अदित्यै पीलिकां दित्यै पूरिका यावलिः स्मृता ५८३ अद्भ्योऽपि क्षीरं च तथा सवित्रे च कुशोदनं लड्डुकं मरिचं चैव ज
याय घृतचन्दनम् ५८४ रुद्राय पायसं गुडं अर्यम्णे शर्करान्वितं पायसं च सवित्रे तु गुडापूपबलिः स्मृतः ५८५ विवस्वते तथा देयं रक्तचंद
नपायसं इन्द्राय सघृतं देयं हरिद्रालोदनं तथा ५८६ घृतोदनं च मित्राय अग्राममांसं मधु तथा राजयक्ष्मणे च पृथ्वीधराय च मितौजसे
५८७ मांसानि कूष्माण्डमिति आपवत्साय वै दधि ब्रह्मणे पञ्चगव्यं च यवतिलाक्षतं दधि ५८८ विविधान्भक्ष्यभोज्यांश्च फलानि रुमः
विविधानि च एवं दत्त्वा बलिं सम्यक् दद्यात्तेभ्योऽपि हिरण्मयं प्रणवाद्यैश्चतुर्थ्यन्तैर्नाममन्त्रेण मन्त्रवित् सर्वेभ्योऽपि हिरण्यं च ब्राह्मणा १८

यांपयस्विनीं ५९० अथवापायसंदद्यात्सर्वेभ्यश्चसदीपकं ततोबाह्यास्थिनानानुवलिन्दद्याद्विधानतः ५९१ चरकीमाषभक्तन्त्वस
घृतंपद्मकेशरं हविश्चैवतथाग्नेये वितानकविदारिके ५९२ माषभक्तंसरुधिरंहरिद्राभक्तमेवच नैरृत्यांपूतनायैमाषभक्तेनसंयु
तं ५९३ रुधिरास्थिपीतरक्तंबलिन्दद्यान्निवेदयेत् वायव्येपापराक्षस्यैमत्स्यमांसंसुरासवं ५९४ ततःशाखाद्विनोद्दिष्टुकंदायरुधिरंसु
रः अर्यम्णेमाषभक्तन्त्वदक्षिणेविनिवेदयेत् ५९५ जम्भकायैतथामांसंरुधिरंपश्चिमेन्यसेत् पिलिपिच्छिकायोत्तरेवस्त्रसक्काम
वलिःस्मृतः ५९६ इत्येतेषान्देवतानाम्बलिन्दद्याद्विधानतः शासादादौतथैतेषाम्बलिन्दद्यात्प्रयत्नतः ५९७ भीमरूपायैशा
नेकपोतकस्तुर्वबलिः वसारुधिरमांसानाडुग्रायातथैवच ५९८ आग्नेयादिनिसन्धारीत्रिपुरान्तकरूपधृक् अग्निजिह्वस्तुनै
ऋत्येदुग्धसैन्धवसंयुतम् ५९९ मांसञ्चरुधिरन्देयन्नमोऽदिक्यालिनेनमः करालिकेपक्वमांसंरुधिरंसैन्धवम्मयः ६०० दे
नुकेपूर्वदिग्भागेवलिस्स्यात्पायसंस्रक्सक् अग्निवेतालिकेयाम्येरुधिरंमांसमेवच ६०१ कालाख्यंपश्चिमेदद्याद्बलिमान्सोदनस्य
च एकपादेगास्याकुग्रायावलिस्तथा ६०२ आग्नेयपूर्वयोर्मध्येगन्धमाल्यैर्वितानकं नैरृत्यपश्चिमान्तस्थोज्वालास्यःपरिकी
र्तितः ६०३ तस्मैदध्यन्नसंयुतंमोदकानिवदापयेत् दिक्पालानाम्बलिन्दत्वाक्षेत्रपालवलिन्ततः ६०४ आगमोक्तेनमन्त्रेणवदम्
त्रेणवैतया ६०५ नमोभगवतेक्षेत्रपालायत्र्यस्त्रिंशत्कोटिदेवाधिदेवायनिर्जितायभाभासुरित्रिनेत्रायखड्गकिङ्किणिज्वालामुखभै
रवरूपिणेतुरुतुरुहुरुहुरुललवषवषवषकेङ्कारदुरितदिक्क्षुखमहावाहोऽग्रघकर्तव्येवास्तुकर्मणिअमुकंयजमानंपाहिपाहिस्वायुः

वि॰ कर्त्ताक्षेमकर्त्ताभव अमुंपशुंदीपसहितंसुरण्डंमाषभक्तबलिंगृह्णगृह्णस्वाहा ६०६ इतिबलिंदत्वा नैरृत्यान्दिशिभूतेभ्योसन्ध्याका
र॰ लेविशेषतः बलिन्दद्याद्विधानेनमन्त्रवित्तत्तभुग्यमी पुरोहितस्तथायाज्यद्भुडोदनमथापिवा ६०७ कुल्माषेणतुसम्मिश्रैःयाव
१९ कापूपसंयुतैः वकुपकान्नसंयुक्तैर्वालःक्रीडनकैस्तथा ६०७ फलैश्चदाडिमीवीजैःकालपुष्पैर्मनोरमैः मात्रानननाशनमितावलि
कर्मणिचोदिताः ६०८ मन्त्राः देव्योदेवामुनीन्द्राभुवनपतयोदानवास्सर्वसिद्धाः यक्षारक्षांसिनागागरुडसुखखगाः गुह्यकादेवदे
वाः डाकिन्योदेववेश्याहरिदधिपतयोमातरोविघ्ननाथाः प्रेताभूताःपिशाचाःपितृवननगराद्याधिपाःक्षेत्रपालाः ६०९ गन्धर्वाः
किन्नरास्सर्वेजटिलाःपितरोग्रहाः कूष्माण्डाःपूतनारोगाज्वरावैतालकाःशिवाः ६१० अस्तकपुत्राचपिशुनाभक्ष्यमांसान्यने
कशः लम्बक्रोडातथाह्रस्वाःदीर्घाश्शुक्लास्तथैवच ६११ खंजाःस्थूलास्तथैकाक्षानानापक्षिमुखास्तथा व्यालास्याउष्ट्रवक्त्राश्च
वक्त्राक्रोडवर्जिताः ६१२ धमनाभातमालाभाद्विपाभामेघसन्निभाः गवलाभाक्षितिनिभाश्चशनीस्वनसन्निभाः ६१३ द्रुतगाश्चम
नोगाश्चवायुवेगसमाश्चये बहुवक्त्राबहुशिराबहुबाहुसमन्विताः ६१४ बहुपादाबहुदृशःसर्पाभरणभूषिताः विकटामुकुटाकेचित्
स्थावैरत्नधारिणः ६१५ सूर्यकोटिप्रतीकाशाविद्युत्सदृशवर्चसः कपिलाद्रुतभुग्वर्णाश्यमथावहुरूपिणः ६१६ गृह्णन्तुवलयस्सर्वेनृ
नायान्तुबलिर्नमः आचार्यस्तुततोनीत्वाकलशम्मन्त्रमन्त्रितं ६१७ स्वयम्प्रत्यङ्मुखोभूत्वाप्राङ्मुखंयजमानकं स्वशाखोक्तेनमन्त्रे
णआगमोक्तेनवातथा ६१८ स्नापयेत्कुम्भतोयेनमन्त्रैःपौराणिकैस्तथा वैदिकैर्वातंथामन्त्रैःसवस्त्रस्यःकुटुम्बवान् ६१९ दारपुत्र

राम:
१९

समेतस्य यजमानस्य ऋत्विजः सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः ६२० ब्रह्मा विष्णुश्च शम्भुश्च साध्याश्च समरुद्गणाः आदित्या
वसवो रुद्रा अश्विनौ च भिषग्वरौ ६२१ अदितिर्देवमाता च स्वाहा सिद्धिः सरस्वती कीर्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहूस्तथा
६२२ दितिश्च सुरसा चैव विनता कद्रुरेव च देवपत्न्यश्च याः प्रोक्ता देवमातर एव च ६२३ सर्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां ग-
णाः नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्रसन्धयः ६२४ सम्वत्सरा दिनेशाश्च कलाकाष्ठाः क्षणा लवाः सर्वे त्वामभिषिञ्चन्तु काल-
स्यावयवाः शुभाः ६२५ एते चान्ये च मुनयो वेदव्रतपरायणाः सशिष्यास्ते अभिषिञ्चन्तु सदनाश्च तपोधनाः ६२६ वैमानिकाः सुर-
गणाः सारवस्सागरैः सह मुनयश्च महाभागा नागाः किम्पुरुषाः खगाः वैखानसा महाभागा द्विजा वैहायनाश्च ये सप्तर्षयः सदार-
श्च ध्रुवस्थानानि यानि च ६२७ मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः भृगुः सनत्कुमारश्च सनकोऽथ सनन्दनः ६२८ सनातन-
श्च दक्षश्च जैगीषव्यो भगन्दनः एकतश्च द्वितश्चैव त्रितो जाबालिकश्यपौ ६३० दुर्वासा दुर्विनीतश्च कण्वः कात्यायनस्तथा मा-
र्कण्डेयो दीर्घतपाः शुनःशेपो विदूरथः ६३१ और्वः सम्वर्तकश्चैव च्यवनोऽत्रिः पराशरः द्वैपायनो यवक्रीतो देवराजः सहानुजः ६३२
पर्वतालस्त्रोवल्यः पुण्यान्यायतनानि च प्रजापतिर्दितिश्चैव गावो विश्वस्य मातरः ६३३ वाहनानि च दिव्यानि सर्वे लोकाश्चराच-
राः अग्नयः पितरस्तारा जीमूताः खं दिशो जलं ६३४ एते चान्ये च बहवो वेदव्रतपरायणाः सेन्द्रा देवगणाः सर्वे पुण्यश्रवणकीर्तनाः
६३५ तोयैस्त्वामभिषिञ्चन्तु सर्वोत्पातनिवर्हणे यथाभिषिक्तो मघवानेभिर्मुदितमानसैः ६३६ [illegible]

महद्गणैः अभिषेकञ्च कुर्वीत मन्त्रैः पौराणिकैस्तथा ६३७ ततः शुद्धोदकैः स्नानं यजमानस्य कारयेत् वास्तुमण्डलमध्ये तु ब्रह्मस्थाने
प्रपूजयेत् ६३८ सुरूपां पृथिवीं दिव्यरूपाभरणसंयुतां स्त्रीरूपां प्रमदावेशधारिणीं सुमनोहराम् ३३९ महाव्याहृतिपूर्वेण पूजयेत्तां
धरां पुनः धारयेति च मन्त्रेण सम्प्रार्थ्य च पुनः पुनः ६४० सर्वदेवमयो वास्तुर्वास्तुदेवमयं परम् ततः स्वनाममन्त्रेण ध्यात्वा तत्रैव पूज
येत् ६४१ ततश्चतुर्मुखं देवं प्रजेशं चाह्वयेत्ततः गन्धादिभिश्च तं पूज्य प्रणम्य च पुनः पुनः ६४२ वास्तुपुरुष नमस्तेस्तु भूमिशय्यारत
प्रभो मद्गेहं धनधान्यादिसमृद्धिं कुरु सर्वदा ६४३ वाचयित्वा ततः स्वस्ति कर्कटं परिगृह्य च सूत्रमार्गेण तोयस्य धारां प्राग्दक्षिणेन च
६४४ पातयेत्तेन मार्गेण सर्वबीजानि चैव हि सर्वबीजजलैरेवं तन्मार्गेणापि सञ्चरेत् ६४५ इति वास्तुविधानं तु कृत्वा तां स्नानमण्डपात्
समानीय शिलां तत्र सूत्रधारो गुणान्वितः ६४७ तत्र दिक्साधनं कुर्याद्गृहमध्ये सुसाधिते ईशानादिक्रमेणैव स्वर्णकुद्दालकेन तु ६
४८ खनित्वा कोणभागे तु मध्ये चैव विशेषतः नाभिमात्रं तथा गर्तं शिलानां स्थापनं शुभं ६४९ सूत्रच्छेदे भवेन्मृत्युः कीले चावाङ्मु
खे गदः स्कन्धाच्युते शिरोरोगः कुम्भाद्धृते पतेः क्षयः ६५० गृहेशस्य पत्नीनाशः स्मृतिलोपोथ मृत्युदः भग्ने कीर्तिवधः कुम्भे कुलस्योत्सर्गे
वर्जिते ६५१ सूत्रे प्रसार्यमाणे तु गर्दभो यदि रौति चेत् तत्रास्थिशल्यं जानीयात् श्वसृगालादिलङ्घिते ६५२ रविदीप्ता दिशि यातु तत्र
चेत्परुषो रवः सस्पृष्टाङ्गसमाने च तस्मिन् शल्यं विनिर्दिशेत् ६५२ शिलाविन्यासकाले तु वासन्ने द्विरदादयः तस्मिन्नदेहसंभूतम् ।
स्थिशल्यं विनिर्दिशेत् ६५४ कुब्जं वामनकं भिक्षुं वैद्यं रोगातुरानपि दर्शनं सूत्रकाले तु वर्जयेत्क्षिप्रमिच्छता ६५५ श्वनो हुलहुला

नाच्चमेघानाङ्कु विहैनच गर्जितानपिसिंहानांस्वनितंघनदम्भवेत् ६५६ स्तूतेप्रसार्य्यमाणेतुदीप्तोग्निर्यद्दिदृश्यते पुरुषोघोरकारह्डो
भवेद्राज्यमकराटवम् ६५७ शङ्खतूर्य्यादिनिर्घोषवसुभिर्विपुलङ्गृहं योषिताङ्कन्यकानाञ्चक्रीडनञ्चिन्तवर्द्धनं प्रारम्भेवस्तुभागेक्षगो
पनेमृत्युरोगदा स्तम्भारोपणेमध्यामवेष्टोदृष्टिस्तूत्तमा ६५९ दारुणाञ्छेदनेचैवदुःखशोकामयप्रदाः परीक्षासमयेचैवनतु
सौख्यप्रदास्स्मृताः ६६० छत्रध्वजपताकानान्दर्शनेनिधिसम्भवः पूर्णकुम्भेतुसम्प्राप्तिः स्थैर्य्यङ्कुलकलध्वनौ गृहकोणेषुसर्वे
षुपूजाङ्कृत्वाविधानतः ईशानमादितःकृत्वाप्रादक्षिण्येनविन्यसेत् ६६२ अनेनैवविधानेनस्तम्भद्वारादिरोपणं वास्तुविद्यावि
धानस्तुकारयेन्तुसमाहितः ६६२ नन्दाभद्राजयारिक्तापूर्णानाम्नीयथाक्रमं नन्दायाम्पद्ममालिख्यभद्रासिंहासनन्तथा ६
६४ जयायान्तोरणञ्छत्रंरिक्तायाङ्कुम्भमेवच पूर्णायाञ्चचतुर्वाकुम्भिविष्णुसंस्रेस्वयेद्बुधः ६६५ ॐ भूर्भुवःस्वरितितयासर्वानाव
हनंस्मृतं ब्रह्माविष्णुश्चरुद्रश्चईश्वरस्सदाशिवः ६६६ एतेपंचैवपञ्चेषुभूतानावाहयेत्पुनः स्नपनञ्चततःकुर्य्याद्विधिदृष्टेनकर्म
णा ६६७ पञ्चभिःकलशैर्युक्तास्तासान्नामान्यतःशृणु पद्मश्चैवमहापद्मंशंखञ्चविजयन्तथा पञ्चमंसर्वतोभद्रम्मन्त्रेणावाहयेत्तु
तं ६६८ अग्निमूर्द्धेतिचमृदायज्ञायज्ञेतिवारुणैः ६६९ अश्वत्थेतिकषायेनपल्लवेनजलेनच गायत्र्यांचगवाम्मूत्रैर्गन्धद्वारेतिगोम
यैः ६७० आप्यायस्वेतिक्षीरेणदधिक्रावोतिवैदधि घृतवतीतिघृतेनचमधुवातेतिवैमधु ६७१ पयःपृथिव्यामितिचपञ्चगव्येन
संस्नपेत् देवस्यत्वेतिचकुशैःकाण्डात्काण्डाच्चदूर्वया ६७२ गन्धद्वारेतिगन्धेनपञ्चगव्येनवैतथा यात्रोषधीरोषधीभिर्याःफलिनी

तिफलोदकैः ६७३ नमस्तेनिरुथश्रृङ्ग मृदाधान्यमसीतिच धान्यादीन्जिघमितिवकलशेनतथैवच ६७४ ओषधयइत्यस्तैस्तु यवोसि
तियवोदकैः तिलोसीतितिलैःपंचनद्येतिचनदीजलैः ६७५ इमम्मेगङ्गेतिचतथातीर्थानामुदकेनच नमोऽस्तुरुद्रेभ्योमृद्वानगादं
तिसमुद्भवात् ६७६ स्योनापृथिवीचमृदासीतायांमधुभिश्चवा हिरण्यगर्भइतिवासुवर्णोदकसंभवैः ६७७ रूपेणवेतिरौप्येणयद
स्यायेतिवस्त्रजैः संस्नापनीर्थपयसाततःशुद्धोदकेनच ६७८ सम्मार्ज्यशुभ्रवस्त्रेण गन्धेनालिप्यसर्वतः ब्रह्मादीन्पूजयेत्तत्रनामम
न्त्रेणवातथा ६७९ उपचारैःषोडशभिर्मूलमध्यशिरःस्वपि स्नपनस्याभिषेकन्तुवेदमन्त्रैश्चकारयेत् ६८० आब्रह्मन्नितिनन्द्यायामभद्र
कर्णेभिवैतया जातवेदसेतितथापमायत्वेतिमन्त्रकैः ६८१ पूर्णादर्वेतिपूर्णायाङ्कुम्भेणापिसमाचरेत् मूलमध्येपिचतयानामभिर्मंत
त्रकैः ६८२ ब्रह्मयज्ञानमितिचविष्णोरराटमेवच नमस्तेरुद्रइतिचइमन्देवेतिसंस्पृशेत् ६८३ शीर्षेचावाहनङ्कार्यंतद्विष्णोपरमम्पदम्
इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ६८४ समभ्यर्च्यदेव्याधिया इतिचत्र्यम्बकंयजामहेतिच मूर्द्धानंदिवेत्यृचयासम्पूज्यचयथावि
धि ६८५ तेभ्योहिरण्यंदत्वाचवस्त्रालङ्कारवाससी ततस्तुपुण्यघोषेणशिलान्यासम्प्रकल्पयेत् ६८६ ततस्तुलग्नेसम्प्राप्तेपञ्चवा
द्यानिवादयेत् नन्दाम्प्रगृह्यचशिलान्तन्याधारशिलान्न्यसेत् ६८७ तत्रोपरिन्यसेत्तस्मिन्सुकलशम्मन्त्रमन्त्रितं सर्वौषधिजलोपेतम्पा
रदाज्यमधुप्लुतं ६८८ पिहितंरत्नगर्भञ्चतेजोराशिभिरन्वितं सदाशिवस्वरूपंवंध्यात्वापञ्चोपचारकैः ६८९ सम्पूज्यदीपमन्वित्य
स्यवामभागेयगर्तकेः तत्रोपरिन्यसेन्नन्दांसंपूज्यचयथाविधि ६९० नाभिर्मेतिचमन्त्रेणशिरोभवेतिवैतया मार्यनत्वततश्चकुर्यादा

गमोक्तेन मन्त्रवित् ६९१ नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहं प्रासादे तिष्ठ संहृष्टा यावच्चन्द्रार्कतारकाः ६९२ आयुष्कामान्श्रियं देहि देव
वासिनि नन्दिनि अस्मिन्रक्षा त्वया कार्या प्रासादे यत्नतो मम ६९३ महापद्मन्न्यसेत्पश्चात्पूरयेद्बलगर्भितं तत्र भद्रां च संस्थाप्य पूजयेन्नामम
न्त्रकैः ६९४ भद्रवर्णे तिष्ठ च या स्थापयेद्वारुणास्तथा भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ६९५ आयुर्दा कामदा देवि सुखदा च
सदा भव त्वामत्र स्थापयाम्यद्य गृहेस्मिन्भद्रदायिनि ६९६ आधारोपरि विन्यस्य सकलपांशु सुसंज्ञकं कोणे संपूज्य विधिवज्जयां संस्था
पयेत्ततः ६९७ गर्गगोत्रसमुद्भूतां त्रिनेत्रां च चतुर्भुजां प्रासादे स्थापयाम्यद्य जयां चारुविलोचनां ६९८ नित्यं जयाय भूत्यै च स्वामिनो भवभार्ग
वि आत्मवेदस्मेति मंत्रेण सर्वौतेन च मंत्रितः ६९९ आधारोपरि विन्यस्य विजयं कुलशं ततः रिक्तां संस्थापयेत्तत्र मंत्रेणानेन मंत्रवित् ७०० त्र्य
म्बकयजामहे इति तथा वारुणमंत्रकैः स्थापयेत्प्रार्थयेत्तद्वद्रिक्तां रिक्तार्तिहारिणीं ७०१ रिक्ते त्वम्रिक्तदोषघ्ने सिद्धिभुक्तिप्रदे शुभे सर्वदा स
र्वदोषघ्नि तिष्ठास्मिन्त्वं च नन्दिनि ७०२ आधारे विन्यसेन्मध्ये सर्वतोभद्रसंज्ञकं पूर्णां रत्नान्वितं पुंसं सर्वमंत्राभिमंत्रितं ७०३ तत्र संपूज्य
विधिवद्यात्वानत्र सदा प्रिये तत्रोपरि न्यसेत्पूर्णां पूर्णानन्दप्रदायिनी ७०४ पूर्णे त्वं सर्वदा पूर्णान्लोकानां कुरु काश्यपि आयुर्दा कामदा देवि
धनदा सुतदा तथा ७०५ गृहाधारा वास्तुमयी वास्तुदीपेन संयुता त्वामृते नास्ति जगतामाधारस्त्वं जगत्प्रिये ७०६ पूर्णा स्त्रीनिमन्त्रेण हृमं मे
देवेति वैतथा ७०७ मूर्द्धानन्दिवेति च तथा शान्तिमन्त्रैस्तथैव च सहस्रशीर्षेति षोडशभिः प्रमीलेति वै तथा ७०८ इषेत्वोर्जेत्वा आ या
ह्रीनितथा पुनः प्राणोदेवीति मंत्रेण स्थापयेत्प्रयतः शुचिः ७०९ मूर्द्धादिनाद्यष्टीकलशमादक्षिण्येन सर्वतः ईशानादिक्रमेणैव स्थाप्याः सर्वा

वि०
म०
२२

र्यस्तिह्रये ।१० आग्नेयाच्चैववर्णानामाग्नेयादिक्रमेणच सर्वेषामपिवर्णानाङ्के चिदिच्छन्तिसूरयः ।११ यान्तुदेवगणास्सर्वे पूजमाद्
यपार्थिवात् इष्टकामसमृध्यर्थम्पुनरागमनायच ।१२ ततस्तुप्राङ्मुखोभूत्वा आचार्यायनिवेदयेत् दक्षिणाम्ब्राह्मणेनद्व्ययोवि
त्तानुसारतः ।१३ उदङ्मुखायचततः समस्तेतिपुनःपुनः गांवत्सांस्वर्णसुतांतथावासोयुगान्विताः ।१४ यज्ञान्तेआश्रुतान्वस्त्रान्नाचार्या
यनिवेदयेत् दैवज्ञञ्चततस्तोष्यस्थपतीन्वैष्णवानपि ।१५ दक्षिणाञ्चतयोर्दद्याद्गृहच्छायाम्विलोकयेत् रक्षाबन्धोमंत्रपाठःस्यात्पु
यञ्चसमाचरेत् ।१६ ऋत्विग्भ्योदक्षिणान्दद्याच्छिष्टेभ्यश्चस्वशक्तितः दीनान्धकृपणेभ्यश्चदद्याद्वित्तानुसारतः ।१७ शिल्पिवर्गां
स्तुसन्तोष्यदानमानैस्तथैवच ।१८ सम्प्राप्नोतिनरोलक्ष्मींपुत्रपौत्रधनान्वितां ।१९ ॥ इतिशिलान्यासेपञ्चविंशोऽध्यायः ५५ अ
थातःसंप्रवक्ष्यामिप्रासादानांविधानकं देवोरुद्रस्तथाविष्णुर्ब्रह्माद्यास्सुरसत्तमाः ।२० प्रतिष्ठाप्यशुभेस्थानेअन्यथातेभयावहाः ग
र्भादिलक्षणोधात्रीन्स्थलादिनयाभवेत् ।२१ वर्णेनचसुरश्रेष्ठसामहीसर्वकामदा पितामहस्यपुरतःकुलान्यष्टौतुयानितु ।२२ ता
रयेदात्मनासार्द्धंविष्णोर्मन्दिरकारकः अपिनःसत्कुलेकश्चिद्विष्णुभक्तोभविष्यति ।२३ येध्यायेतिसदाभक्त्याकरिष्यामोहरेर्गृहं
तेषाम्विलीयतेपापंपूर्वजन्मशतोद्भवम् ।२४ सुरवेश्मनियावन्तोद्विजेन्द्राःपरमाणवः तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ।२५
मासादेमृन्मयेपुण्यंदृश्यैतत्कथितम्पुरा तस्माद्दशगुणंपुण्यंकृतेशैलमयेभवेत् ।२६ ततोदशगुणंलोहेताम्रेशतगुणंततः सहस्रगु
णितंरौप्येतस्माद्रुक्मेसहस्रकं ।२७ अनन्तफलमाप्नोतिरत्नचित्रेमनोहरे कनिष्ठंमध्यमंश्रेष्ठङ्कारयित्वाहरेर्गृहं ।२८ स्वर्गञ्चवैष्ण

रामः
२२

वंलोकंमोक्षस्त्रलं ...केमात् वाल्येक्रीडमानायेपांशुभिर्भवनंद्दरेः ७२९ वासुदेवस्यकुर्वन्तिनेपितल्लोकगामिनः याभूमिः शस्यतेगेहे
सापासादविधौनथा ७३० योविधिर्गृहनिर्माणेशिलान्यासस्यकर्मणि प्रासादादिषुसंज्ञेयः चतस्त्रस्तुशिलास्तथा ७३१ नन्दाभद्राज
या पूर्णाश्चाग्नेयादिषु विन्यसेत् चतुष्षष्टिपदेवास्तुप्रासादादिषु विन्यसेत् ७३२ नन्दाचतुष्पदेस्तत्र शेषाःस्वस्वपदे स्थिताः वास्तु
पूजाविधिश्चात्र गृहस्थापनकर्मवत् ७३३ सम्पूज्यवास्तुविधिवच्छिलान्यासंततश्चरेत् प्रासादावेवसमासेन शिलालक्षणमुत्तमम्
७३४ शिलान्यासविधानन्तु प्रोच्यतेतदनन्तरं शिलावापीष्टकावापि चतस्त्रोलक्षणान्विता ७३५ प्रासादादौविधानेन न्यस्तव्यासुमनो
हरा चतुरस्त्रासमाःकृत्वासमन्ताद्धस्तसम्मिता ७३६ विस्तारस्यत्रिभागेनवाहुल्येनसुसम्मिता शिलानामिष्टकानाञ्चप्रमाणंलक्षणं
स्मृतं ७३७ नन्दाद्यधिष्ठिताज्ञेयाशिलावाप्यथवेष्टका शिलारूपाण्यथोविन्द्यान्नन्दाद्याश्चेष्टकास्मृताः ७३८ सम्पूर्णास्तुनलाः स्निग्धा
सुसमालक्षणान्विता कुशदूर्वाङ्किताधन्याः सध्वजच्छत्रचामराः ७३९ सकुम्भास्तरणोपेताकूर्ममत्स्यफलान्विताः दर्पणंहस्तिवक्त्रा
ङ्काःमङ्गलद्रव्यलाञ्छिताः ७४० शङ्खपद्मिमृगाङ्काश्चवृषाङ्कास्सर्वदाहिताः स्वस्तिकावेदिकायुक्तानन्द्यावर्त्ताङ्कलाञ्छिताः ७४१ पद्म
दिलक्षणोपेताःशिलासर्वार्थसिद्धिदाः तथागोवाजिपादाङ्काःशिलाधन्याःसुखावहाः ७४२ क्रव्यादमृगपादाङ्काःनरालापक्षिणस्त
या दिङ्मुखावटुदीनाश्चदीर्घकूर्चाक्षनान्विताः ७४३ विवर्णास्फुटिताभग्नाःसंत्याज्यालक्षणच्युता मशस्तप्राणिरूपाङ्काःमङ्गलद्र
व्यलांछिताः ७४४ यथोक्तलक्षणोपेताःशिलानित्यंसुखावहाः इष्टकानांसमासेनलक्षणंशृणुसाम्प्रतं ७४५ एकवर्णासुपक्वाश्चकठु

वि॰ मू॰ २३

जीर्णाश्चवर्जिताः अव्यङ्गारान्विताःश्लक्ष्णवर्णासशर्करा ७४६ भग्नाश्चविभ्रमाहीनावर्ज्जनीयाःप्रयत्नतः सुप्रमाणारक्तवर्णाश्चतुरस्रा
मनोरमाः ७४७ नन्दायागृहमानेनअङ्गुलैः परिकल्पिताः शिलान्यासस्प्रकर्त्तव्यःप्रासादेतुशिलामये ७४८ इष्टकानान्तुविन्यासःप्रा
सादेचेष्टकामये तस्याःपीठम्प्रकुर्वीततावद्देवप्रमाणतः ७४९ आधारनाम्नातुशिलासुदृढासुमनोहरा शैलजेशैलजःपीठश्चेष्टकेचेष्ट
कःस्मृतः ७५० शिलान्यासादिकोभद्रेमूलपादोविधीयते गर्त्तान्विधायकोणेषुचतुर्वेदिसमन्वितान् ७५१ तत्रोपरिविष्णुस्नानंतण्डुलो
दकप्रपूरणं आग्नेयादिक्रमेणैवतासांस्थानानिकल्पयेत् ७५२ तत्राधारशिलान्यस्यस्थिरोभवतिमन्त्रतः प्रतिष्ठाप्यचतुर्ष्वेवकोणेषुच
नियमिव ७५३ तेषाङ्क्रमेणतन्मध्येकलशंस्थापयेत्क्रमात् पद्मश्चैवमहापद्मः शङ्खोमकरकस्तथा ७५४ चत्वारःकलशास्तेतेदिव्या
मंत्रेणमंत्रिताः पल्लवैस्सर्वगन्धैश्चसर्वौषधिभिरन्विताः ७५५ रत्नैस्समुद्रजैर्युक्ताश्चाष्टधातुभिरन्विताः पुण्यतीर्थोदकैर्युक्ताःकृत्वोद
स्वरसंभवाः ७५६ तत्रोपरिन्यसेन्नन्दांपुलकेचशुभेदिने संस्नाप्यपूर्णतोयेनास्नायफडितिमन्त्रतः ७५७ पुनःस्नात्वाथमन्त्रेणसंमार्ज्य
परिष्कृत्येत्।। ॐनन्दायैनमःगन्धादिउपचारान्प्रदापयेत् ७५८ गीतवादित्रघोषेणवेदध्वनियुतेनच प्रागुत्तरशिरस्कान्तांस्थापयेत्प्रयत
स्तुचिः ७५९ ततोध्यानेयंसंगृह्यफडितिपूजयेत्पुनः दिव्यरूपांसुवर्णाभांसर्वाभरणभूषितां सर्वलक्षणसंपूर्णाम्परितुष्टांस्मिताननां
७६० ध्यात्वासमंत्रेणैवार्घ्यम्प्रणम्यचपुनःपुनः ७६१ आवाहयेत्ततोनन्दाम्मन्त्रैर्वैदिकतान्त्रिकैः संपूजयेत्पुनस्तांश्चवस्त्रगन्धादिनाततः ७
६२ धूपयित्वाथसामान्यमुद्राम्प्रदर्श्यमंत्रवित् कल्पयेच्चैवनैवेद्यन्दधिमांसादिसंयुतम् ७६३ ॐनन्दायैनमएह्येहिपूजयेच्चपुष्पमा

राम: २३

नमः ॐनन्देत्वमृद्धिनीपुंसां त्वामत्रस्थापयाम्यहं ७६४ प्रासादेतिष्टसंहृष्टायावद्वैचन्द्रतारकं आयुष्कामंश्रियन्नन्देत्वत्तसिद्धंसवनन्दं
७६५ अस्मिन्रक्षात्वयाकार्याप्रासादेयत्नतःसदा इतिमंत्रमुच्चार्यआग्नेयेतुततःपुनः ७६६ भद्रांसंपूजयेत्तद्वन्नाममन्त्रेणपूर्ववत् भद्रे
त्वंसर्वदाभद्रंलोकानांकुरुकाश्यपि ७६७ आयुष्कामप्रदादेविलोकानाञ्चैवसिद्धिदा नैऋत्येस्थापयेत्तांचजयान्तद्वत्प्रपूजयेत् ७
६८ नाममन्त्रेणपूर्वोक्तमन्त्रेणचतथापुनः ॐजयेत्वंसर्वदाभद्रेसन्निष्टस्थापयाम्यहं ७६९ नित्यञ्चपावहादिवास्वामिनःश्रीप्रदाभव
वायव्येस्थापयेच्चापिजयांसर्वार्थसिद्धये ७७० ईशानेस्थापयेत्पूर्णांपूर्ववत्संप्रपूज्यच ॐपूर्णेत्वन्तुमहाविद्येसर्वसंदोहलक्षणे ७
७१ संपूर्णंसर्वमेवात्रप्रासादेकुरुसर्वदा शिलानामिष्टकानांतुवाचनन्तदनन्तरं ७७२ नकर्तव्यन्तुमनसापितुलुषुभमिच्छता आचा
र्यायवर्णन्दद्यात्सवत्सांहेमसंयुतां ७७३ ऋत्विग्भ्योदक्षिणान्दद्यात्शिल्पिभ्यश्चस्वशक्तितः दैवज्ञंपूजयेच्छ्रुत्यास्थापतिञ्चविशेषतः
७७४ ब्राह्मणान्भोजयेच्छक्त्यादीनान्धांश्चैवतोषयेत् एवम्वास्तुवलिंकृत्वाभजेत्षोडशभागिकां ७७५ तस्यमध्येचतुर्भागन्तस्मिन्गर्भञ्च
कारयेत् भागद्वादशकंसार्द्धंतत्तुपरिकल्पयेत् ७७६ चतुर्भागेनभित्तीनामुच्छ्रायःस्यात्प्रमाणतः द्विगुणःशिखरोच्छ्रायोभित्त्युच्छ्रायाच्च
मानतः शिखरार्द्धस्यचार्द्धेनविधेयातुप्रदक्षिणा चतुर्दिक्षुतथाज्ञेयोनिर्गमस्तुतथाबुधैः ७७८ गर्भसूत्रद्वयंभागेविस्तारेमण्डपस्यतु आय
तस्त्रिविभागांशैर्भद्रयुक्तःसुशोभनः ७७९ पंचभागेनसंभज्यगर्भमानंविचक्षणः भागमेकंगृहीत्वातुप्राग्जीवङ्कल्पयेद्बुधः गर्भसूत्रस
मोभागादग्रतोमुखमंडपः एतत्सामान्यमुद्दिष्टंप्रासादस्येहलक्षणं ७८० अथान्यच्चप्रवक्ष्यामिप्रासादेलिङ्गमानतः लिङ्गपूजाप्रमाणेनक

र्तव्या पीठिका बुधैः ७८१ पीठिकार्द्धेन भागेस्यात्तन्मानेन तु भित्तयः वाह्यभित्तिप्रमाणेन उत्सेधस्तु भवेत्ततः ७८२ भित्त्युच्छ्रायात्तु द्विगुणः शि
खरस्य समुच्छ्रयः शिखरस्य चतुर्भागः कर्त्तव्यास्तु प्रदक्षिणा ७८३ प्रदक्षिणायास्तु समस्त्वग्रतो मण्डपो भवेत् तस्य चार्द्धेन कर्त्तव्य स्त्व
ग्रतो मुखमण्डपः ७८४ प्रासादाच्चिर्गतौ कार्यौ कपोलौ गर्भमानतः ऊर्द्ध्वं भित्त्युच्छ्रायात्तस्य मंजरीं तु प्रकल्पयेत् ७८५ मंजर्याश्चार्द्धभागे
न शुकनासं प्रकल्पयेत् ऊर्द्ध्वं तथार्द्धभागेन वेदीबन्धो भवेदिह ७८६ वेद्याश्चोपरि यच्छेषं कुर्यादामलसारकं एवं विभज्य प्रासादं शो
भनं कारयेद्बुधः ७८७ अथान्यं संप्रवक्ष्यामि प्रासादस्येह लक्षणम् गर्भप्रमाणेन प्रासादप्रमाणं शृणुत द्विजाः ७८८ विभज्य नवधा
गर्भं मध्ये लिङ्गस्य पीठिका पादाष्टकं तु रुचिरं पार्श्वतः परिकल्पयेत् ७८९ मानेनानेन विस्तारो भित्तीनान्तु विधीयते पादं पंचगुणं कृ
त्वा भित्तीनामुच्छ्रयो भवेत् ७९० स एव शिखरस्यापि द्विगुणः स्यात्समुच्छ्रयः चतुर्धा तु शिरो भज्य अर्द्धभागद्वयस्य वा ७९१ शुकनासं प्र
कुर्वीत तृतीये वेदिकामता कण्ठमामलसारं तु चतुर्थे परिकल्पयेत् ७९२ कपोलयोस्तु संहारो द्विगुणोस्य विधीयते शोभनैर्वप्रवल्ली
भिः कुण्डकैश्च विभूषितः ७९३ प्रासादेयस्तृतीयस्तु मया तुभ्यं निवेदितः सामान्यमपरं तद्वत्प्रासादं शृणुत द्विजाः ७९४ त्रिभेदं कारयेत्क्षेत्रं
यत्र तिष्ठन्ति देवताः रथकं त्वातु मानेन वाह्यभागविनिर्गतं नेमीपादेन विस्तीर्णं प्रासादस्य समन्ततः गर्भं तु द्विगुणं कुर्यान्नेमीमानं भवे
दिह ७९६ स एव भित्तीनामुत्सेधो द्विगुणः शिखरो मतः प्राग्ग्रीवं पञ्चभागेन निष्क्रासतस्य चोच्यते ७९७ कारयेच्छिखरं तद्वदामाकारस्य
विधानतः प्राग्ग्रीवं तस्य मानेन निष्काशेन विशेषतः ७९८ कुर्याद्वा पञ्चभागेन प्राग्ग्रीवं कर्णमूलतः कारयेत्कनकं तत्र गर्भं तेनेह सम्

लनः ७९९ एवं तु त्रिविधं कुर्याज्ज्येष्ठमध्यकनीयसं लिङ्गमानानुभेदेन रूपभेदेन वा पुनः ८०० एते सामान्यतः प्रोक्ता नामतः शृणुताधुना मे
रुमन्दिरकैलाशकुंभसिंहमृगास्तथा ८०१ विमानछन्दकस्तद्वच्चतुरस्रस्तथैव च अष्टास्रः षोडशास्रश्च वर्तुलः सर्वभद्रकः ८०२ सिंह
स्यनन्दनश्चैव नन्दिवर्द्धन एव च सिंहो वृषः सुवर्णश्च पद्मकोथ समुद्गकः ८०३ प्रासादनामतः प्रोक्ता विभागं शृणुत द्विजाः शतशृङ्गश्चतु
र्द्वारो भूमिका षोडशोच्छ्रितः ८०४ नानाविचित्रशिखरो मेरुप्रासाद उच्यते मन्दरो द्वादशः प्रोक्तः कैलासो नवभूमिकः ८०५ विमानछ
न्दक जालद्वनेकशिखरान्वितः सचाष्टभूमिकस्तद्वत्सप्तभिर्नन्दिवर्द्धनः ८०६ विंशांडकसमायुक्तो नन्दनः समुदाहृतः षोडशास्रकसंयुक्तो
नानारूपसमन्वितः ८०७ अनेकशिखरस्तद्वत्सर्वतोभद्र उच्यते चन्द्रशालासमोपेतो विज्ञेयः पंचभूमिकः ८०८ वलभीछन्दकस्तद्वन्
शुकनासस्त्रयान्वितः वृषस्योच्छ्रायतस्तुल्यो मंडितस्त्रित्रिवर्जितः ८०९ सिंहः सिंहगतिर्ज्ञेयो गजो गजसमस्तथा कुंभः कुंभाकृतिस्तद्वद्भू
मिका नवकोच्छ्रयः ८१० अङ्गुलीपुटसंस्थानपंचांडकविभूषितः षोडशास्रः समंतात्तु विज्ञेयः ससमुद्गकः ८११ पार्श्वयोश्चन्द्रशालास्यः
उच्छ्रयो भूमिकाद्वयं तथैव पद्मकः प्रोक्तः उच्छ्रायो भूमिकाद्वयं ८१२ षोडशास्रः स विज्ञेयो विचित्रशिखरः शुभः मृगराजस्तु विख्यातः
चन्द्रशालाविभूषितः ८१३ प्राग्ग्रीवेन विशालेन भूमिका षट् समुन्नताः अनेकचन्द्रशालस्तु गजप्रासाद उच्यते ८१४ पर्यंकगरुडो वै
गरुडो नाम नामतः सप्तभूम्युच्छ्रयस्तद्वच्चन्द्रशालात्रयान्वितः ८१५ भूमिकास्तु षडशीतिर्विहीनः सर्वतो भवेत् तथान्यो गरुडस्तद्वदु
च्छ्रायो दशभूमिकः ८१६ पद्मकः षोडशास्रस्तु भूमिद्वयमथाधिकः पद्मतुल्यप्रमाणेन श्रीतुष्टक इति स्मृतः ८१७ पञ्चांडकस्त्रिभू

मिस्तु गर्भेहस्तचतुष्टयं वृषोभवतिनाम्नायःप्रासादःसार्वकामिकः ८१८ सप्तकापञ्चकाश्चैवप्रासादायेमयोदिताः सिंहस्यतेसमाज्ञेयाये
चान्येन्यत्नमाश्रतः चन्द्रशालैस्समोपेताःसर्वेमाम्रीवसंयुताः ऐष्टिकादारवाश्चैवशैलजाश्चसतोरणाः मेरुःपञ्चाशद्धस्तस्यान्मंदा
रःपंचहीनकः चत्वारिंशत्तुकैलासश्चतुस्त्रिंशद्वितानकः ८१९ नन्दिवर्द्धनकस्तद्वद्द्वात्रिंशत्समुदाहृतः त्रिंशद्भिर्नन्दनःप्रोक्तःसर्वतोभद्रक
स्तथा ८२० एतेषोडशहस्ताःस्युश्चत्वारोदेववल्लभाः कैलासोमृगराजस्तुवितानच्छन्दकोगजः एतेद्वादशहस्तास्युरेतेषांसिंहनाद
कः गरुडोष्टकरोज्ञेयःसिंहोदशउदाहृतः ८२२ एवमेवप्रमाणेनकर्त्तव्याःशुभलक्षणाः यक्षराक्षसनागानामष्टहस्तःप्रशस्यते ८२३
तस्मान्नेवोद्भवः सप्तज्येष्ठलिङ्गाःशुभावहाः श्रीवत्सकादयश्चाष्टौमध्येयस्यउदाहृताः ८२४ तथाहंसादयःपंचकन्यासेशुभदामताः
अथातःसंप्रवक्ष्यामिशैलानांलिङ्गस्यलक्षणं ८२५ लिङ्गदैर्घ्याङ्गुलैर्लिङ्गंविस्ताराद्गुणयेद्बुधः लिङ्गविस्तारमानेनत्रिगुणम्पीठवि
स्तरम् ८२६ गर्भगेहप्रविस्तारंत्रिभागंपरिकल्पयेत तेषुभागेषुचैकेनपीठविस्तारमाचरेत् ८२७ दीर्घन्तुर्वीतपीठानांविष्णुभागा
वसानकं मूलेमध्येतयोर्देवब्रह्मविष्णुहरांशकं ८२८ पीठिकालक्षणंवक्ष्येयथावदनुपूर्वशः पीठोच्छ्रायेयथावच्चभागान्षोडशकल्पयेत् ८२९ भूमावेकःप्रविष्टःस्याच्चतुर्भिर्जगतीमताः वृत्तोभागस्तथैकःस्यात्कृत्तादूर्ध्वस्तुभागतः ८३० भागैस्त्रिभिस्तथाकण्ठंकंठयदा
स्त्रिभागतः भागेनचोर्ध्वकेयश्चशेषभागेनपट्टिका ८३१ प्रविष्टंभागमेकन्तुजगतीयावदेवतु निर्गमस्तुपुनस्तस्यायावद्वैपोषपट्टिका
वारिनिर्गमनार्थंन्तुतत्रकार्यम्प्रमाणतः लिङ्गवाणादिकन्तुयोन्यन्तांशम्वात्रिभागिनं ८३२ पञ्चभागंद्विभागम्वायथायोग्यंयथास्थितं

सप्तभागकृतेलिङ्गे चतुरंशान्निवेदयेत् ८३३ पीठमध्यगतेगर्त्तेत्रिभागश्चैकभागकं पञ्चभागेतुभागांस्त्रीन्द्विभागेद्वयंयथाक्रमं ८३४ एवम्बा
णादिलिङ्गानाम्प्रवेशः शिवनोदितः स्थूलंशिरश्चपंमूलंउन्नतेनसुखंशिरः ८३५ निम्नमध्यंदुनिस्यानन्मालगेहादिलिङ्गके अन्यानसु
रवर्तनाडुन्यास्पृष्टमुत्तशिरः ८३६ ज्येष्ठामध्याकनिष्ठाचत्रिविधाब्रह्मणशिला त्रिगुणंविस्तृनकुर्यादन्यथावासकारकः ८३७
उक्तानामपिपीठानाम्विस्तारादधिकाङ्गुलैः त्रिभागपीठविस्तारं कुर्यात्त्रैकभागतः ८३८ दीर्घकुर्यात्प्रणालञ्चतत्त्रिभागैकविस्तरं
प्रदलस्थ्नचतुष्केतुस्थाप्यकूर्मशिलाततः ८३८ तद्गर्भेविन्यसेत्कूर्मंसौवर्णन्द्वादशांसुखं तत्ररत्नादिभिस्सार्द्धंभूमिञ्चह्रदयेन्यसेत्
८३९ तस्यैवह्रितनकर्मणीशंधंवज्रलेपकैः लिप्तायथातिनोयेनमोक्षोलिखेत्कवातः ८४० ततस्तेजोविधाशक्तिङ्कलिनासनरूपिणीं
स्थापयेत्सुलग्नेतुदैवज्ञोक्तेमुहूर्तके ८४१ अथातःसंप्रवक्ष्यामिमण्डपानाञ्चलक्षणं मण्डपाश्चवरान्वक्ष्येप्रासादस्यानुरूपतः ८४२
विविधामण्डपाश्चार्याः श्रेष्ठमध्यकनीयसः नामतस्तान्प्रवक्ष्यामिशृणुध्वन्द्विजसत्तमाः ८४३ पुष्पकःपुष्पभद्रश्चसुवृत्तोमृतनन्दनः कौ
शल्योवुद्धिसङ्कीर्णोगजभद्रोजयावहः ८४४ श्रीवत्सोविजयश्चैववास्तुकीर्णस्तुनन्धरः जयेभद्रोविलासश्चसंश्लिष्टःशत्रुमर्दनः ८४५
भाग्यपंचोनन्दनश्चभानवोमानभद्रकः सुग्रीवोहर्षणश्चैवकर्णिकारपदाधिकः ८४६ सिंहश्चयामभद्रश्चशत्रुघ्नश्चतथैवच सप्तविंश
तिरस्मानालक्षणंशृणुतद्विजाः ८४७ स्तम्भायत्रचतुष्षष्टिः पुष्पकःसउदाहृतः द्वाषष्टिःपुष्पभद्रस्तुषष्टिस्तुवृत्तउच्यते ८४८ अष्टपंचा
शकःस्तंभःकथ्यतेमृतनन्दनः कौशल्योथद्विपञ्चाशच्चतुःपंचाशतानुनः ८४९ नाम्नानुवुद्धिसङ्कीर्णोद्विहीनोराजभद्रकः जयावहस्त्वि

पंचशयकुर्यात्कर्मसुद्विहीनकः ८५० द्वात्रिंशत्कोष्ठेषु करणीयमत्र्यविंशतिः षट्त्रिकोष्टाविंशतिमिर्द्दिरष्टासिंहउच्यते ८५१ द्विहीनोयाम
भद्रस्तुसुशत्रुश्चनिगद्यते यामभद्रः कचिस्मोक्तोद्वादशस्तंभसंयुतः ८५२ मण्डपाश्चकथिताह्येतेयथावल्लक्षणान्विताः त्रिकोणन्तन्नमध्ये
तुच्चष्टकोणन्द्विरष्टकं ८५३ चतुष्कोणञ्चकर्तव्यंसंस्थानम्मण्डपस्यतु राज्यञ्चविजयञ्चैवआयुर्वर्द्धनमेवच ८५४ पुत्रलाभः श्रियः पु
ष्टिः स्त्रीपुत्रादिषुक्रमाद्भवेत् एवन्तुशुभदः प्रोक्तस्त्वन्यथात्वभयावहः ८५५॥ इतिषष्ठोऽध्यायः ६ अथातः शृणुविप्रेन्द्रद्वाराणांलक्षणमुत्त
मं द्वाराणांचैवविन्यासाः पञ्चाशच्चदशस्मृताः ८५६ त्रिषुत्रिषुचमासेषुनभस्यादिषुवैक्रमात् यद्दिक्सुखोवास्तुनरस्तुस्तेसदनंशुभं
८५७ अन्यदिङ्मुखगेहन्तुदुःखशोकभयप्रदं तस्मात्तद्दिङ्मुखन्द्वारंप्रशस्तंनान्यदिङ्मुखं ८५८ अथद्वितीयः त्रिषुत्रिषुचराशीनाङ्क
न्यादीनांस्थितेरवौ पूर्वादिषुनकर्तव्यंद्वारञ्चैवयथाक्रमात् ८५९ अथतृतीयः कर्ककुंभगतेसूर्येमुखंस्यात्पूर्वपश्चिमे मेषकीटगते
वापिमुखंचोत्तरदक्षिणे ८६० मुखानिचान्यथाकर्तुर्व्याधिशोकभयानिच अन्यराशिगतेसूर्येनविदध्यात्कदाचन ८६१ अथचतुर्थः
सिंहेतुपश्चिमंद्वारन्तुलायाञ्चोत्तरन्तथा कर्कटेपूर्वदिग्द्वारंद्वारंपश्चिमवर्जितं ८६२ कर्कटेकेचसिंहस्थोपूर्वद्वारन्नशोभनं तुलायांवृ
श्चिकेचैवद्वारंपश्चिमवर्जितं ८६३ कर्कटेर्केचसिंहस्थेयाम्यद्वारन्नशोभनं सूर्येमकरकुंभस्थेसौम्यद्वारञ्चनिन्दितं ८६४ नृयुक्कन्या
धनुर्मीनसंस्थितेर्केनकारयेत् द्वारस्तंभौतथादारुसञ्चयञ्चविवर्जयेत् ८६५ माघेतेहिवदारूणांछेदनन्नैवकारयेत् मोहात्कुर्वन्ति
येमूढास्तद्गेहेग्निभयंभवेत्॥ अथपंचमः पूर्णादिस्वष्टमीयावत्पूर्वास्यंपरिवर्जयेत् उत्तरास्यंनकुर्वीतनवम्यादिचतुर्दशी ८६६ ॥

अथषष्ठः प्रत्यङ्मुखं ब्राह्मणानां क्षत्रियाणान्तथोत्तरे वैश्यानाम्पूर्वदिग्द्वारं शूद्राणां दक्षिणे शुभं ८६७ अथसप्तमः कर्कटो वृश्चिको मी
नो ब्राह्मणाः परिकीर्त्तिताः मेषसिंहो धनुर्धारी राशयः क्षत्रियाः स्मृताः वैश्या वृषमृगौ कन्या शूद्राः शेषाः प्रकीर्त्तिताः वर्णक्रमेण पूर्वादिक्
दक्षिणे पश्चिमे तथा ८६९ यो यस्य राशिमेत्तस्य तस्य द्वारं ततश्चरेत् दिशि तद्विपरीतं तु कर्तुर्नेष्टफलं भवेत् ८७० अथाष्टमः धनुर्मेष
सिंहे यदा रात्रिनाथस्तदा पूर्वभागे न्यसेद्द्वारमाद्यं मृगः कन्यका गोषु द्वारं च याम्ये तुलायुग्मकुंभे तथा पश्चिमास्यं ८७१ कर्कटे वृ
श्चिके मीनराशिस्थे चोत्तरे न्यसेत् अथनवमः कृत्तिकाद्यं सप्त पूर्वे मघाद्यं सप्त दक्षिणे ८७२ मैत्राद्यं पश्चिमे ज्ञेयं धनिष्ठाद्यं सप्त उत्तरे प
दिग्भसंस्थिते चन्द्रे तद्दिग्द्वारम्प्रशस्यते ८७३ पृष्ठदक्षिणवामस्थेन विदध्यात्कदाचन॥ अथदशमः प्रागादिविन्यसेद्द्वर्गान्सव्यमार्गेण
वेद्विजा ८७४ सिंहे चोत्तरदिग्द्वारं पश्चिमास्यं विवर्ज्जयेत् प्राग्दक्षिणे गजे द्वारं वृषे प्राच्यां न चान्यदिक् ८७५ पृष्ठद्वारं न कर्त्तव्यं कु
णेष्वेव विशेषतः अथद्वादशः त्रिषु त्रिषु च मासेषु मार्गशीर्षादिषु क्रमात् ८७६ पूर्वदक्षिणतो पश्चिमोत्तरस्या शाङ्कमादगुः द्वारे वह्नि
भयम्प्रोक्तं स्तम्भे वंशविनाशनं ८७७ अथत्रयोदशः रक्षः कुबेराग्निजले च याम्ये वायव्यकाष्ठासु च भानुवारात् वसेत मध्यात्पृष्टसुदि
सुचक्रे सुखे विवर्ज्यो गमने गृहे च अथचतुर्दशः ध्रुवन्त्वाद्यं गृहं प्रोक्तं सर्वद्वारविवर्जितं धान्ये पूर्वदिशि द्वारं दक्षिणे जयसंज्ञकं ८७९
सुचक्रे चोत्तरे वर्ज्यं न्दुर्मुखे चोत्तरे तथा प्रा
प्राग्दक्षिणे नन्दगृहे पश्चिमे खरमे वच प्राक्पश्चिमे तथा कान्ते प्रत्यग्याम्ये मनोरमे ८८० सुवक्रे चोत्तरे वर्ज्यं न्दुर्मुखे चोत्तरे तथा प्रा
गुत्तरे क्रूरसंज्ञे विपदो दक्षिणे तथा ८८१ धनदे पश्चिमे वर्ज्यं क्षयं चोत्तरपश्चिमे आक्रन्दे दक्षिणं त्याज्यं विपुले पूर्वमेव च ८८२ विज

हस्तीस्वानमेवच ८९८ तिर्यक्छुरवशैर्द्वारशौ स्तंभद्वारावरोपणं प्रासादेषु चहर्म्येषु गृहेष्वन्येषु सर्वदा ८९९ आग्नेय्यामथ मंस्तंभं स्थापयेत्तद्वि
धानतः स्तंभोपरि यदा पश्येत्काकगृध्रादिपक्षिणः ९०० दुर्निमित्तानि संवीक्ष्य तदा कर्त्तुर्न शोभनं तस्मात्स्तंभोपरिछत्रं शाखां फलवती
तुवा ९०१ धारयेद्ध्वजं वा वस्त्रं बुधो रत्नादि निःक्षिपेत् दिक्साधनं च कर्त्तव्यं शिलाद्वारावरोपणं ९०२ स्तंभे च वास्तुविन्यासे तथा च गृहक
र्मणि प्रासादे वा तथा यज्ञे मण्डपे बलिकर्मसु ९०३ क्रांतिकोदयतः प्राचीं प्राचीं स्यात्कुर्वणोदये चित्रास्वात्यन्तरे प्राचीं दिनं प्राचीं रवेः स्थि
ता ९०४ यद्दिवा श्रवणं पुष्यं चित्रास्वात्योर्यदन्तरं एतत्प्राचीदिशारूपं दण्डमात्रो दिने दिने ९०५ द्वादशांगुलमानेन शङ्कुना वा प्रकल्पये
त् शिलातले सुसंशुद्धे सुलिप्ते समतां गते ९०६ द्विष्टशङ्कुप्रमाणेन समं मण्डलमालिखेत् तन्मध्ये स्थापयेच्छङ्कुं स्पृष्टं कृत्वा द्विरेखिकं धु
ति प्रवेश निर्गमस्थाने बिन्दुं प्रकल्पयेत् अपरे द्विचन्मध्ये शङ्कुमारोपयेत्ततः ९०७ तत्र बिन्दुद्वयं तन्मानं प्रोनयोर्यदन्तरं तेनानुमानेन
विषुवद्दिवसान्तं च साधयेत् ९०८ यावन्तो व्यवहृयन्ते तावद्वै तोयं निःक्षिपेत् शोधयेद्योजयेद्वापि दक्षिणोत्तरयोर्द्वयोः ९०९ क्रान्त्यर्थं च
क्षिप्येत तत्प्राची समुदाहृता ९१० अथ द्वारफलानि ईशानमादितः पूर्वे आग्नेय्यां दक्षिणे स्थिताः नैरृत्यात्पश्चिमे ज्ञेया वायव्यां सौम्य
दिक्स्थिताः ९११ पूर्वादिक्रमयोगेन हुताशोऽग्निभयं भवेत् पर्जन्ये प्रचुरा नार्यो जयन्ते बहु कित्तदा ९१२ माहेन्द्रे नृपवात्सल्यं सूर्ये तिक्रो
धनता भवेत् सत्ये नृतत्वं विज्ञेय भृङ्गे रत्नं च भृशं भवेत् ९१३ अन्तरिक्षे च विज्ञेयो नित्यं चौरसमागमः दक्षिणे स्यात्पुत्रनाशो वायव्ये प्रेष्यमे
वच ९१४ नीचत्वं वितथे ज्ञेयं गृहे तिष्ठति संततिः स्थूद्रकर्मा भवेद्याम्ये नैरृत्ये कर्त्तृनाशनं ९१५ अथ नंभगराजाख्ये मृगे पुत्रविनाशनं

पश्चिमे पित्र्येस्वल्पायुर्धनंदौवारिकेमदद्वयं ९१६ सुग्रीवेपुत्रनाशःस्यात्पुष्पदन्तेतुवर्द्धनं वरुणेक्रोधभोगित्वंनृपभङ्गस्तथासुरे ९१७
नित्यांतिशोषितांशोकेपापाख्येपापसञ्चयः उत्तरेरोगवधोनित्यंनागेरिपुभयंमहत् ९१८ मुख्येधनसुतोत्पत्तिर्भल्लाटेविपुलाःश्रियः
सोमेतुधर्मशीलत्वंभुजङ्गेवहुवैरता ९१९ कन्यादोषासदादित्येअदितौधनसञ्चयः पदेपदेकृतंश्रेष्ठंद्वारंसत्फलदायकं ९२० पदद्व
यकृतंयच्चयद्वामिश्रफलप्रदं सूत्रेनवहृजेभागेवस्तुभागन्तथैवच ९२१ प्रासादेकारयेद्विद्वान्नवासेनविचारणा वहुद्वारेष्वलिन्देषुनद्वा
रनियमःस्मृतः ९२२ सदैवसदनेजीर्णोद्वारेसाधारणेष्वपि मूलद्वारंप्रकर्तव्यंघटस्वस्तिकसन्निभं ९२३ पश्चात्पत्रप्रथमागणाकीर्णंप्र
स्यते वीक्षिप्रमाणात्परतोद्वारंदक्षिणपश्चिमे ९२४ नकार्यमप्रथमाकीर्णंसुखिनस्त्वाप्रकल्पयेत् प्राकारेचप्रणालयाश्चद्वारंप्रागुत्तरंन्य
सेत् ९२५ द्विशालेसुवनद्वद्वारस्यावत्सकल्पयेत् चतुर्द्वारमयेदुर्गेद्वारदोषोनविद्यते ९२६ प्रधानंयन्महाद्वारंस्याद्वाभित्तिषुसंस्थितं
रथ्याविद्धंनकर्तव्यंनृपेणभूतिमिच्छता ९२७ सरलेनचमार्गेणप्रवेशोयत्रवेश्मनि मार्गवेधन्विजानीयान्नानाशोकफलप्रदं ९२८
तरुवेधन्विजानीयाद्यदिद्वारमुखेस्थितं कुमारमरणंज्ञेयंनानारोगश्चजायते ९२९ अपस्मारभयंविद्यात्कूपाभ्यन्तरवासिनां द्वारा
ग्रेपंकवेधन्तुदुःखशोकामयप्रदं ९३० जलस्रावस्तथाद्वारेमूलेनर्थव्ययोभवेत् द्वाराग्रेदेवसदनंवालानामार्तिदायकं ९३१ देवद्वारंवि
नाशायपाङ्कंद्वारमेवच ब्रह्मणोयत्रसंविद्धंतद्भवेत्कुलनाशनं ९३२ गृहमध्येकृतंद्वारंद्रव्यधान्यविनाशनं अवातकलहंशोकंना
र्योवासंप्रदूषयेत् ९३३ उत्तरेपंचमंद्वारंब्रह्मणोविद्धमुच्यते तस्मात्सर्वप्रयत्नेनमध्येचैवविशेषतः ९३४ द्वारंनकारयेद्धीमान्प्रासादेतु

विपर्ययः देवतासन्निधानेतुप्रसानाभिमुखेतथा ९३५ स्त्रीनाशंसंभवेद्येस्यात्पाषाणोचनथैवच देवतासन्निधानस्थेगृहेगृहपतेःक्षय
९३६ प्रसानाभिमुखेगेहेराक्षसाद्भयमादिशेत् चतुःषष्ठिपदंकृत्वामध्येद्वारंप्रकल्पयेत् ९३७ विस्ताराद्द्विगुणोच्छ्रायस्तत्त्रिभागः
कटिर्भवेत् विस्तारार्द्धंभवेद्गर्भोविज्ञेयोन्यःसमन्ततः ९३८ गर्भपादेनविस्तीर्णंद्वारन्द्विगुणमुच्छ्रितं उच्छ्रायात्पादविस्तीर्णाशाखातन
हृदुंबरः ९३९ विस्तारपादप्रमितंबाहुल्यंशाखयोःस्मृतं त्रिपंचसप्तनवभिःशाखाभिर्द्वारमिष्यते ९४० कनिष्ठंमध्यमंज्येष्ठंयथायो
ग्यंप्रकल्पयेत् विस्ताराद्द्विगुणोच्छ्रायःचत्वारिंशाङ्गुलोत्तमं ९४१ धन्यमुत्तममायुष्यंधनधान्यकमेवच शतंवाशीतिसहितंवानमिर्गम
नंभवेत् ९४२ अधिकंदशभिस्तद्वत्तथाषोडशभिः शतं शतमानन्तनीयन्तुभवत्यशीतिभिस्तथा ९४३ दशद्वाराणिचैतानिकनीयो
कानिसर्वदा अन्यानिवर्जनीयानिमनसोद्वेगदानितु ९४४ द्वारवेधन्तुयत्नेनसर्वथापरिवर्जयेत् गृहोच्छ्रायाद्द्विगुणितन्त्यक्त्वाभू
मिंवहिःस्थितः ९४५ नदोषायभवेद्वेधोगृहस्यगृहिणस्तथा गृहार्द्धंगृहिणोज्ञेयागृहान्पूर्वोजनेशुभाः ९४६ पश्चिमेवातथैवस्याद्दक्ष
गेहानसिद्धिदाः पृष्ठद्वारंनकर्तव्यंमुखद्वारंवरोधनं ९४७ पिहितेतुमुखद्वारेकुलनाशोभवेद्ध्रुवं पृष्ठद्वारेसर्वनाशोन्मादःस्वयमुद्घाटि
तया ९४८ मानोनेव्यसनंकुर्यादधिकेतस्करोभयं अर्द्धखंडंयदिद्वारंदलावेधंविनिर्दिशेत् ९४९ कपाटछिद्रंवेधंचकपाटेवेधोवाभवेत् य
त्रविद्धंयदाद्वारंप्रासादेचैवनश्रयं ९५० स्तंभंवारवनेयस्यनस्यवंशक्षयोभवेत् त्रिकोणंशकटाकारंसूर्यव्यजनसन्निभं ९५१ मुरजंव
र्तुलन्द्वारमानहीनञ्चवर्जयेत् त्रिकोणेपीड्यतेनारीशकटेस्वामिनोभयं ९५२ सूर्येधनविनाशःस्याद्वन्तुपिकलहंस्मृतं धननाशस्तु

मुखेवर्तुलेकन्यकोद्भवः ५५३ मध्यहीनंतुयद्द्वारंनानाशोकफलप्रदं ॥ स्तंभाग्रेविन्यसेत्काष्टंपाषाणंनैवधारयेत् ५५४ नृपालयेदेवगेहे
पाषाणानाञ्चकारयेत् द्वारशाखाञ्चपाणांतुगृहेपाषाणनिर्मितां ५५५ कर्तव्यानेतरेषाञ्चकारयेन्मतिमान्नरः गृहमध्येकृतंस्तंभंब्र
ह्मणोवेधमुच्यते ५५६ भित्तिश्चैवनकर्तव्यानब्रह्मस्थानमुच्यते नतस्थानंयत्नतोरक्षेद्बृहीकीलादिकांस्तथा ५५७ भांडेनाशुचिनातद्व
च्छल्येनभग्नमनातथा रोगानानाविधाश्चैकाजायन्तेतत्रनित्यशः ५५८ द्वारस्योपरियद्द्वारन्तद्द्वारंशकटंस्मृतं चतुष्षष्ठ्यंकुलोत्से
धंचतुस्त्रिंशाञ्चविस्तरं द्वारस्योपरियत्नेनशिलावापशाकटंचयत् अध्यान्तेशुद्रजंप्रोक्तंकुलेकुलविनाशनं ५५९ पीडाकरंपीडितन्तुस्वभ
वंमध्यपीडितं वास्त्वोन्नतेप्रवासःस्याद्निम्नेदस्युतोभयं दौर्भाग्यंनिधनंरोगादारिद्र्यंकुलहन्तथा विरोधश्चार्थनाशश्चसर्ववेधे
क्रमाद्भवेत् ५६० पूर्वेणफलिनोवृक्षाः क्षीरवृक्षाश्चदक्षिणे पश्चिमेनजलंश्रेष्ठंपद्मोत्पलविभूषितं ५६१ सर्वतश्चापिकर्तव्यंपरिखा
वलयादिकं याम्यन्तपोवनस्थानमुत्तरेमातृकागृहं ५६२ वारुणेश्रीनिवासस्तुवायव्येगृहमालिका उत्तरेयज्ञशालान्तुनिर्माल्यस्था
नमुच्यते ५६३ वारुणेसोमदैवस्यैवबलिन्निर्वपनंस्मृतं पुरतोवृषभस्थानंशेषंस्यात्कुसुमायुधं ५६४ जलवापीतथैशान्येविष्णुस्त्वज
लशायिनं एवमायतनंकुर्यात्शुभमाडपसंयुतं ५६५ घण्टाविनानसकतोरणचित्रयुक्तन्नित्योत्सवप्रमुदितेनजनेनसार्द्धं यःकारयेत्तु
रगृहंभवनंध्वजाढ्यं श्रीस्तन्नमुञ्चतिसदादिविपूज्यतेच ५६६ एवन्द्वारार्चनविधिंकृत्वाद्वारबलिन्ततः महाध्वजन्द्वारमुखेप्रवेश
समयेकृतं ५६७ पुत्रदारधनादीनामृद्धिंदंसर्वकर्मणि इतिद्वारविधिःप्रोक्तामयाब्रह्ममुखोदितः ५६८ यःकरोतिविधानेनससुखी

पुत्रवान्भवेत्॥ इतिवास्तुशास्त्रेद्वारनिर्माणेसप्तमोऽध्यायः ७॥ अधुनाकथयिष्यामिवापीकूपक्रियाविधिं तडागपुष्करोद्यानमंड
पानांयथाक्रमात् ९६९ अथव्ययादिसंशुद्धिर्मासशुद्धिस्तथैवच यथागेहेदेवगेहेतथैवात्रविचारयेत् ९७० त्रिकोणञ्चतुरस्रञ्चवर्तु
लञ्चोत्तमंस्मृतं धनुषङ्कुलसंपद्मंमध्यमंतज्जलाश्रयं ९७१ सर्पोरगान्धवज्राकारन्न्यूनंप्रोक्तञ्चनिन्दितं कोणेधान्यंभयंशोकनाशनं
सौख्यमेवच ९७२ भयंरोगन्तथादुःखङ्कीर्तिन्व्याधिजंभयं पश्चक्रमेणैवचमासादेतत्फलंस्मृतं ९७३ रोहिणीचोत्तरात्रीणिपुष्यमै
त्रञ्चवारुणं पित्र्यञ्चवसुदैवत्यंभगणोवारिबंधने जलशोषोभवेत्सूर्येभौमेरिक्तंविनिर्दिशेत् मन्देचमलिनङ्कुर्याच्छेषावाराः शुभावहाः
९७४ नन्दाभद्राजयारिक्तापूर्णाचैवयथाक्रमात् यथानामफलन्तद्वत्कुर्यादित्याहकर्मशेषतः ९७५ लग्नेशशाङ्कोथजलोदयेवापूर्णेऽथ
शीकेन्द्रगतोव्ययेवा लग्नेथजीवोभृगुनन्दनोवासौम्येजलंविस्तृतसुरसंसुगन्धं ९७६ कुजेतृतीयेभृगुजेस्तगेवषष्ठेरवौलाभगतेकेतुवे
चन्द्रेष्टषष्ठेव्ययवर्जितेचप्रियस्तुजलन्तद्भवतीहचित्रं ९७७ सौरेतृतीयेमदनेचचन्द्रेषष्ठेरवौलाभगतेचभौमे केन्द्रेशुभेष्वाष्टमवर्जि
तेश्वजलंस्थिरंस्याद्धनपुत्रदञ्च ९७८ केन्द्रत्रिकोणेषुशुभस्थितेषुपापेषुकेन्द्राष्टमवर्जितेषु सर्वेषुकार्येषुशुभंवदन्ति प्रासादकूपादित
डागवाप्यां ९७९ चन्द्रोदयेनहिवसेसुरेज्येकेन्द्रस्थितेचोपचयेःखलेश्च उद्यानकूपादितडागवापीजलाशयानाङ्करणम्प्रशस्तं ९८०
सर्वेषुलग्नेषुशुभम्वदन्ति विहायसिंहालिधनुर्धराश्च ग्रहासनालोकनयोगसौम्ययोगात्तदाप्रकुर्याज्जलभांशवर्गे ९८१ सर्वासुदिक्षु
स्सलिलम्प्रकुर्याद्विहायनैऋत्ययमाग्निवायून् पूर्वोत्तरेशानजलेशदिक्षुकृतंजलंसौख्यसुतप्रदञ्च ७८२ नपूर्वकंवारुणदिक्स्थि

नञ्चविवर्ज्ययेन्मध्यगृहस्थितञ्च कूर्मोरगर्गोद्विवशिष्टमुख्यादिष्टाश्शिनानाञ्चजलाशयानां ९८३ पुत्राग्निवह्नेश्च भयम्विनाशः स्त्रीणां कुलिर्वाह्ययदोष्यमेव नैःस्वन्धनस्युत्तविरुद्धिकृत्का पूर्वोदिदिक्षुफलमेतदेव ९८४ व्याससमाणंद्विगुणञ्चगुण्यंहारस्यहारोत्तरतोत्तरस्य मध्येष्टहारेष्वपिपिण्डसंज्ञमेकादिहाराविषमाःप्रशस्ताः ९८५ एकान्तरंसन्धिसमेस्तितानाम्व्याधिर्विनाशोभयशोकमृत्यं आद्यन्तयोर्मध्यवियुक्तमेतत्तदाविनाशङ्कुरुतेसपत्न्याः ९८६ पूर्वापरौचोत्तरयाम्यगेषुच्छिद्रेषुहारेष्वपिमध्यभागे कुर्वन्तिशोकम्वधवन्धुनाशं हारेषुमध्येष्वपिचिन्त्यमेतत् ९८७ आद्यन्तयोर्द्वारगतेषुसूत्रसर्वेषुद्वाराग्रगतेशुभास्यात् भ्रातृन्कलत्रादियथोत्तराणिहारस्यहारोत्तरतोत्तरस्य ९८८ दिग्मध्यसंस्थाःशुभदानराणाम्व्यङ्कुषुबन्धंपशुपत्निनाशं याम्योत्तरंहीनधनङ्करोतिहीनोदकंहीनधनङ्करोति ९८९ चतुर्थोष्टमगैःपापैर्लग्नगेवाखलग्रहे चन्द्रेष्टमेनदाकर्त्ता म्रियतेमासमध्यतः ९९० केन्द्रेपापग्रहैर्युक्तेअष्टमेचाव्ययेपिवा धर्मस्थानगतैर्वापितज्जलंक्षीयतेचिरात् ९९१ केन्द्रगेस्सौरिभौमार्कैरष्टमस्थेनिशाकरे तज्जलम्वर्षमध्येतुनतिष्ठतिजलाश्रये ९९२ एकःपापोष्टमस्थोपिचतुर्थेसिंहिकासुतः नवमेभूमिपुत्रस्तुतज्जलम्विषवत्स्मृतं ९९३ नन्दाद्याःपूजनीयाश्चपूर्वोक्तेनैवमार्गतः ईशानादिक्रमेणैवन्यसेद्दिक्षु शेषितस्थले मध्येपूर्णाविनिःक्षिप्यकुंभोपरिशुभेदिने वरुणस्यविधापाद्यैःपूजांमंत्रैश्चवारुणैः ९९४ वर्त्वेतशाकोलानांशिरास्थानेनिवेशनं ततोग्रहार्चनम्वास्तुपूजाविधिमतःपरं ९९५ सौम्यायनेकीटगतेपतङ्गे मधुंविनाशीतकरेसुपूर्णे तथाविरिक्तेविकृतेचवारेकार्यंप्रतिष्ठाचजलाशयानां ९९६ लग्नेषु

सौम्यग्रहैर्वीक्षितेषु कार्योपि निष्ठा खलु तत्र तेषां जलोदयेपूर्णशशी च केन्द्रे जीवे विलग्ने भृगुजे ऽस्तगे वा ९९७ एकोपि चान्ये भवने स्वकीये
केन्द्रस्थितो वा शुभदो नराणां एकोपि जीवः सितासितानां स्वोच्चस्थितानां भवने स्वकीये ९९८ केन्द्रत्रिकोणोपगतानराणां शुभावहं त
त्सलिलं स्थिरं स्यात् ९९९ ये कुर्वन्ति नराः पुण्याः पुरे पानीयशालकं विष्णुना सह मोदन्ते यावद्भूमण्डले जलं १००० इति वास्तुशा
स्त्रे जलाशयादिकरणे ऽष्टमो ऽध्यायः ८ अथातः शृणु विप्रेन्द्र दारूणां छेदने विधिं सुरदारुचन्दनसमीमधूकतरवस्तथा १००१
ब्राह्मणानां शुभा वृक्षाः सर्वकर्मसु शोभनाः क्षत्रियाणां तु खदिरबिल्वार्जुनकशिंशिपाः १००२ शालतूनिकशरलाः नृपवेश्मनि
सिद्धिदाः वैश्यानां खदिरं सिन्धुस्यन्दनाश्च शुभावहाः १००३ तिन्दुकार्जुनशाशाश्च वैसराश्चाश्वकण्टकाः ये चान्ये क्षीरवृक्षाश्च ते
शूद्राणां शुभावहाः १००४ हंसगराशिगते सूर्ये माघे भाद्रपदे तथा वृक्षाणां छेदनं कुर्याद्गृहसंस्थापनार्थे न कारयेत् १००५ सूर्यर्क्षाद्दे दगो
नर्के द्विग्विश्वनरवसम्मिते चन्द्रर्क्षे दारुकाष्ठानां छेदनं शुभदायकं १००६ सर्वेषामपि वर्णानां दारवः कथिताः शुभाः सुरदारुचन्दन
समीपिंशिपाः खदिरस्तथा १००७ शालाशालविस्तृताश्च मध्याला सर्वजातिषु एकजात्या द्विजात्या वा त्रिजात्या वा महीरुहाः १००८
कारयेत्सर्वगेहेषु नतु दुर्ह्वानैव कारयेत् एकदारुमया गेहाः सर्वशल्यनिवारकाः द्विजात्या मध्यमा प्रोक्ता स्त्रिजात्याः अधमाः स्मृताः
क्षीरिणं फलिनश्चैव कण्टकाढ्यं च वर्जयेत् १०१० श्मशानेनाग्निना चैव दूषिते पथि वा शुष्काः वज्रेण मर्दितं चैव वातभग्नं तथैव च मार्ग
वृक्षं पुराकृतं चैत्यदुःखस्थं दैवकं १०११ अर्द्धभग्नार्द्धदग्धाश्च अर्द्धशुष्कास्तथैव च १०१२ व्यङ्गाः कुब्जाश्च काणाश्च अतिजीर्णास

थैवच त्रिशीर्षो वहुशीर्षोश्च अन्यवृक्षेण भेदिनाः १०१३ स्त्रीनाम्नायेचनरवस्तेवर्ज्यागृहकर्मणि क्षीरिणः क्षीरनाशाय फलिनः पु
त्रनाशनं १०१४ कण्टकीकलहङ्कुर्यात्काकाक्रन्तधनक्षयं गृध्रवृक्षम्महारोगं श्मशानस्थंमृतिप्रदं १०१५ वज्राङ्कुम्वज्रभयदं
वातदग्धातदूषितं मार्गवृक्षेकुलंध्वस्तंपुरकृन्तंभयप्रदं १०१६ कल्पवृक्षेभवेन्मृत्युर्देववृक्षेधनक्षयं चैत्येगृहपतेर्मृत्युर्देवर
क्षेभयम्भवेत् १०१७ आर्द्रभग्नम्विनाशाय आर्द्रेशुष्कन्धनक्षयं व्यङ्गेमृतप्रजाःगेयाःकुब्जेकुब्जास्तथैवच १०१८ काणेराजभय
म्विन्द्यात्स्निजीर्णेगृहक्षयः त्रिशीर्षेगर्भपातःस्याद्बहुशीर्षेमृतप्रजाः १०१९ अन्यभेदेशत्रुभयंउद्याने स्वेभयन्तथा वल्लीदृष्टेदारिद्र
त्वंपुष्पवृक्षेकुलक्षयः १०२० सर्पयुक्तेसर्पभयन्देवालयगतेक्षयः कन्याजन्मातुकन्याङ्कु सच्छिद्रे स्वामिनोभयं १०२१ लिङ्गं वा
प्रतिमायाम्वातथाशक्रध्वजेपिच आग्नेयपञ्चकेचन्द्रेनविद्ध्यात्कदाचन गृहेदेवालयेवापिपरीक्षेतप्रयत्नतः मासदग्धम्वारदग्ध
न्तिथिदग्धन्तथैवच १०२२ रिक्तातिथिञ्चदर्शञ्चनिषिद्धंषष्ठींचवर्जयेत् एकार्गलन्तथाभद्रांयेचयोगाःकुसंज्ञकाः १०२३ उत्पातदूषि
तम्ऋक्षंसङ्क्रान्तौग्रहणेषुच वैधृतौचव्यतीपातेनविद्ध्यात्कदाचन १०२४ सौम्यंपुनर्वसुंमैत्रंकरम्मूलोत्तराद्वयं स्वातौचश्रवणेचै
वृक्षाणांन्छेदनंशुभं १०२५ समभूमिर्वनेयस्मिनस्मिन्वृक्षंप्रपूजयेत् गन्धपुष्पादिनैवेद्यम्वलिन्दद्याद्विशेषतः १०२६ वस्त्रेण
छादितङ्कृत्वावेष्टयेत्तन्तुनातथा श्वेतवर्णानुवर्णेनवर्णानुक्तक्रमेणच १०२७ मंत्रैरेतैर्यथान्यायंप्रार्थयेत्तंपुनःपुनः आचार्यःसूत्रधार
श्चरात्रौतमधिवासयच १०२८ स्पृष्ट्वावृक्षमिमंमंत्रंब्रूयाद्रात्रौविधानवित् यानीहवृक्षेभूतानितेभ्यःस्वस्तिनमोस्तुवः १०२९ उपहार

गृहीत्वेमंक्रियतांवासपर्यय: पार्थयित्वांवरयतेस्वस्तिनेस्तुनगोत्तम १०३० गृहार्येस्वान्यकार्यार्थेपूजेयंप्रतिगृह्यतां परमान्नमोदकौदन
दधिपल्लोलादिभिर्दैवी: १०३१ मद्यै:कुसुमधूपैश्चगन्धैश्चैवनकम्तुन: सुरपितृपिशाचराक्षसभुजगासुरविनायकाश्च गृह्णन्तुम
न्मयुक्तांरक्षांसंस्मृत्यचव्रूयात् यानीहभूतानिवसंतितानिवलिंगृहीत्वाविधिवत्प्रयुक्तां १०३२ अन्यत्रवासंपरिकल्पयन्तुक्षमन्तुना
नघनमोस्तुतेभ्य: १०३३ रक्षांप्रभातेसलिलेनसिक्त्वामधुघ्राज्यलिप्तेनकुठारकेन पूर्वोत्तरस्यांदिशिसंनिकृत्यप्रदक्षिणंशेषमतोविह
न्यात् १०३४ छेदयेद्वत्तुलाकारंपतनञ्चोपलक्षयेत् प्राग्दिश:पतनङ्कुर्याद्धनधान्यसमर्चितं आग्नेय्यामग्निदाह:स्याद्दक्षिणेमृत्युमादि
शेत् नैऋत्येकलहङ्कुर्यात्पश्चिमेपशुवृद्धिदं १०३५ वायव्येचौरभीति:स्यादुत्तरेचधनागमं ईशानेचमहाश्रेष्ठंनानाश्रेष्टन्तथैवच १०
३६ भग्नंवायद्भवेत्काष्ठंपश्चान्यत्तत्समध्यगं तत्रशालङ्गृहेवर्ज्यन्दोषदङ्कर्मकारयेत् १०३७ भग्नकाष्ठेहतानारीस्वामिनायुधसंज्ञके
कर्मकर्तारमत्तस्थंधननाशकरम्महत् १०३८ एकभागम्महाश्रेष्ठंधनधान्यसमृद्धिदं पुत्रदारपशूंश्चैवनानारत्नसमन्वितं द्विभागं
सफलम्प्रोक्तन्त्रिभागन्दुखदंस्मृतं चतुष्पष्टेवन्धनञ्चपञ्चमेमृत्युमादिशेत् १०४० जर्जरेधननाश:स्यान्मध्येछिद्रगदप्रदं नि
ष्फलेनिष्फलङ्गेहंसफलेफलमेवच १०४१ विरूपेयननाश:स्यात्सक्षतेरोगमेवच हीनाङ्गेक्षीरनाशञ्चविकटेकन्यकोद्भवं १०
४२ काष्ठन्तोभज्यतेकीटैर्यदिपक्षंघृतंजले कृष्णपक्षेछेदनञ्चनशुक्लेकारयेद्बुध: १०४३ उत्कृत्यकाष्ठंशकटै:मनुष्यैर्वासमन्त
त: वेन्यानाशेतस्यनाश:आरभङ्गेवलक्षय: १०४४ अर्थक्षयोक्षभेदेचतथाभङ्गेचवर्धके विजयायभवेत्स्वेत:मीनोरोगप्रदोम

वि० प्र० ३२

नः १०४५ जयदश्विरूपश्वरत्नैः शल्याद्वयं भवेत् प्रवेशे चैव दारुणां वालकाश्चापि नारुणाः १०४६ यद्वा वा चतुष्पथम्लिनं तथैव भवि
ष्यति रज्जुच्छेदे वालपीडा पश्व भेदे तथैव च १०४७ इति प्रोक्तं मया रज्जुच्छेदनार्थं विधानतः शकुनानि परीक्ष्याद्दारुच्छेदनकर्मणि
१०४८ इति वास्तुशास्त्रे रज्जुच्छेदनविधौ नवमोऽध्यायः ९ ॥ अथ प्रवेशो नवमन्दिरस्य सौम्यायने जीववसिते वलाढ्ये स्याद्वेश
नं ज्येष्ठतपोत्य माघवे मार्गे शुचौ मध्यफलप्रदं स्यात् १०४९ माघे येलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च चैत्रेर्थहानिर्ध
न धान्यलाभो वैशाखमासे पशुपुत्रलाभः ज्येष्ठे च मार्गे च शुचौ च मासे मध्यः प्रदिष्टः प्रथमप्रवेशः यात्रा निवृत्तो मनुजाधिपानामन्वा
स्त्रवेनन्भूतवलिञ्च पूर्वे १०५० दिने प्रदद्यादथ दिक्क्रमेण मांसं च रक्तं चाप्ययुतं चतुर्षु ये भूतानीति मन्त्रेण चतुर्दिक्षु वलिं हरेत् १०
५१ गृहमूले वलिं दद्यात् गृहस्योर्द्धं तथैव च दद्याद्दीपं पूर्वदिने वास्तुपूजानन्तरं तेत् १०५२ घृतं दुग्धं तथा मांसं लड्डुकं मधुसंयुतं प्र
वादिक्रमयोगेन वलिं दद्याद्विशेषतः १०५३ स्कन्दधरादियक्षाणां ईशानादिक्रमेण च चकारादिवलिञ्चैव विदिक्षु विनिवेदयेत् १०
५४ विष्णोरराटेति मन्त्रेण पूजयेद्वास्तुपूरुषं नमोस्तु सर्पेभ्य इति सर्पराजं प्रपूजयेत् १०५५ अन्येषामपि देवानां आयन्ती मे तदेवितः अ
पूर्वसंज्ञेन गृहे विधिरेष उदाहृतः १०५६ कालशुद्धिविचारोत्र कर्तव्यः शुभमिच्छता कुम्भेर्के फाल्गुने मार्गे कार्तिके तु शुचौ तथा १०५७ न
वेशं प्रवेशनं सर्वथा परिवर्जयेत् द्वंद्वसौपूर्विकगृहे मासदोषो न विद्यते १०५८ सुचिरप्रवासे नृपतेर्देशने गृहवेशने भानुशुद्धिं प्रकर्तव्या
वान्नमासे प्रवेशनं १०५९ निर्गमान्नवमे वर्षे मासे वा दिवसेपि वा प्रवेशो निर्गमश्चैव नैव कुर्यात्कदाचन १०६० यद्येकदिवसे राज्ञः प्रवेशो

एम
३२

निर्गमस्तथा तदाप्रवेशिकश्चिन्त्यं बुधैर्नैवतु यात्रिकं १०६१ गृहारम्भदिने मासे धिष्ण्ये वारे विशेद्गृहं विप्रो सौम्यायने हर्म्यं नूतनं [illegible]तु सर्वं
दा १०६२ कुलीरकन्यकाकुंभे दिनेशे न विशेद्गृहं याम्यस्थानगरस्यापि पत्तनस्यान्तथैव च १०६३ मृदुध्रुवर्क्षैः शुभदं नववेश्मप्रवेशनं पु
ष्यस्वातीयुते सौम्ये जीर्णे स्याद्वासवद्वये १०६४ क्षिप्रैश्चरैश्च नक्षत्रैर्नववेश्मप्रवेशनं न कुर्यादुग्रनक्षत्रैर्दारुणैश्च कदाचन १०६५
उग्रोद्भुनि गृहस्वामी दारुणेषु कुमारकं द्विदैवभे पतिनाशश्चाग्निभेग्निजभयं १०६६ प्रवेशनन्दाभैः स्यादभ्यदिक्स्थैर्नकारयेत् रि
क्तातिथिं भौमवारं शनिस्थानेनैव कारयेत् १०६७ केचिच्छनिं प्रशंसन्ति चौरभीतिस्तु जायते॥ कुयोगे पापलग्ने वा चरलग्ने चरांश
के १०६७ शुभकर्मणि येवर्ज्यास्ते वर्ज्यास्मिन्प्रवेशने नन्दायां दक्षिणद्वारं भद्रायां पश्चिमेन तु १०६८ जयायामुत्तरद्वारं पूर्णायां पूर्वं
माविशेत् व्याधिहा धनहा चैव वित्तदो बन्धुनाशकृत् १०६९ पुत्रहा शत्रुहा स्त्रीप्रनाशहापि टकमदः सिद्धिदो धनदश्चैव भयकृज्जन्मए
शिराः १०७० लग्नस्थकमतो राशिजेन्मलग्नात्प्रवेशने लग्नं सौम्यान्वितं कार्यं न तु क्रूरैः कदाचन १०७१ निन्दिताश्चापि लग्नांशाश्चरराशि
गता यदि शुभांशास्तु पुनः कार्याः कर्तृभोपचयस्थिताः १०७२ भूयो यात्रा भवेन्मेषे नाशङ्क कर्कटकेपि वा व्याधिस्तुलाधरे लग्ने मकरे धान्यना
शनं १०७३ एतद्वेशाशकफलं यदि सौम्ययुतेक्षितौ चरांशे चरलग्ने च प्रवेशं नैव कारयेत् १०७४ चित्रा शतभिषा स्वाती हस्तः पुष्यः पुनर्वसुः
रोहिणी रेवती मूलं श्रवणोत्तरफाल्गुनी धनिष्ठा चोत्तराषाढा भाद्रपदोत्तरान्विताः अश्विनी मृगशीर्षं च अनुराधा तथैव च वास्तुपूजन
मेतेषु नक्षत्रेषु करोति यः सम्प्राप्नोति नरो लक्ष्मीमिति शास्त्रेषु निश्चयः १०७५ नित्यपाने गृहे जीर्णे प्राशने परिधानके वधूप्रवेशे माङ्ग

ल्येनमौढ्यकुरुशुक्रयोः १०७६ त्रिकोणकेन्द्रगैः सौम्यैः स्थिरेद्व्यङ्के स्वलग्रहैः द्विकत्रिकोणकेन्द्राष्टवर्जितैः प्रविशेद्गृहं १०७७ अभिजिच्छ्र
वणयोर्मध्ये प्रवेशे सूतिकागृहे नृपादीनां ब्राह्मणानां नावधेयकङ्कदावन १०७८ क्रूरयुक्तङ्कूरविद्धं मुक्तङ्कूरग्रहेण च यन्नलव्यन्नतच्छुल
स्त्रिविधोत्पातदूषितं १०७९ लत्तया निहतं यच्च क्रान्तिसाम्येन दूषितं प्रवेशे त्रिविधे त्याज्यङ्कृहगोनाभिदूषितं १०८० यावच्चन्द्रेण भुक्तं न ह
क्षेनैव तु शोभनं जन्मभाद्दशमङ्कृमेसांघातर्क्षं नु षोडशं १०८१ अष्टादशं सामुदायं त्रयोविंशं विनाशकं मानसं पञ्चविंशाख्यं नाचरे
द्देषु शोभनं १०८२ स्वोच्चसंस्थे गुरौ लग्ने शुक्रे वा वेश्मसंस्थिते यस्यात्र वेशो भवति तद्गृहं सौख्यसंयुतं १०८३ स्वोच्चस्थे लग्नगे सूर्ये चतुर्थे दे
वपूजिते पस्यात्र योगो भवति संपदाघङ्कृहं भवेत् गुरौ लग्ने स्तगे शुक्रे षष्ठे वैके लाभगे शनौ प्रवेशकाले यस्यायं योगः शत्रुविनाशदः ॥
१०८४ लग्ने शुक्रे सुखे जीवे लाभे वैके रिपुगे कुजे वेश्मप्रवेशो योगेस्मिन् शत्रुनाशाकरः परः १०८५ गुरुशुक्रौ च हिबुके लाभगौ कुजभा
स्करौ प्रवेशो यस्य भवति तद्गृहं भूतिदायकं १०८६ एकोपि जीवज्ञशशी सितानां सोच्चगः सुखे स्वभे वा न द्गृहं सौख्यदायकं लग्नगे पि वा
१०८७ अष्टमस्थे निशानाथे यदि योगशतैरपि तदा ते निष्फला ज्ञेया रक्षावक्ष्यत्व नावूव क्षीणचन्द्रोन्त्यषष्ठाष्टसंस्थितो लग्नतस्तथा
भार्याविनाशनं वर्षान्सौम्यसुक्ते त्रिवर्षतः १०८८ जन्मभाद्दष्टमं स्थानं लग्नाद्वाथ तदंशकं त्यजेच्च सर्वकर्माणि दुर्लभं यदि जीवितं १०८९
प्रवेशलग्नान्निधने यः कश्चित्पापखेचरः क्रूरर्क्षे हन्ति वर्षार्द्धात्स्वभर्क्षे वाष्टवत्सरात् १०९० रन्ध्रान्तु त्रादृनादायात्यञ्चस्वर्क्षे स्थिते क्रमा
त् इर्वाशाद्विमुखङ्गेह द्विशोद्वा मो भवेद्यतः गुरुदेवाग्निगोविप्रऊर्द्ध्वपादैद्विनस्यं सौम्यभत्यकृशिरोमृत्युर्वेशगयारुक्सुतान्विदा ॥

१०९१ प्राक्‌शिराः शयने विद्याद्दक्षिणे सुखसंपदः पश्चिमे प्रबला चिन्ता हानिर्मृत्युं तथोत्तरे १०९२ स्वगेहे प्राक्‌शिराः सुप्यात्‌ श्वाशुरे दक्षिणा
शिरः प्रत्यक्‌शिरः प्रवासे तु नोदक्‌सुप्यात्‌ कदाचन १०९३॥ अथ शय्याशयनासनानां लक्षणम्‌ कथयामि समासेन दारुकर्मक्रमेण
च आयशुद्धा तथा कार्या यथा गोहरिकुञ्जराः १०९४ तथैव दोलिकायानं यथा शोभं विधीयते प्रमाणं शृणु विप्रेंद्र यस्मात्‌ सोऽहं हृदु स्थात्‌
१०९५ कथयामि तथा शय्यायां येन सौख्यमवाप्नुयात्‌ अशनं स्यन्दनश्चन्दनं हरिद्रुसुरदारु तिंदुकी शालाक्काम्रसर्याजर्जुनपनसक शाकाश्च
शिंशिपा च शुभा १०९६ अशनिजलानिलहस्तिप्रपतिता मधु विहङ्गकृतनिलया चैत्यश्मशानपथिजोर्द्धशुष्कवल्लीनिबद्धाश्च १०९७
कण्टकिनो ये स्युर्महानदीसङ्गमोद्भवा ये च सुरमासादमा ये च याम्यपश्चिमदिग्गता १०९८ प्रतिषिद्धवृक्षजाये च ये चान्येपि अनेक
धा त्याज्यास्ते दारवस्सर्वे शय्याकर्मणि कर्मवित्‌ १०९९ अनेककुलविनाशः स्याद्व्याधिशत्रुभयानि च ११०० पूर्वच्छिन्नं यदा दारु भवेद्दा
रुभवेत्ततः शकुनानि परीक्षेत कुर्यात्‌ स्वपरिग्रहः श्वेतपुष्पाणि दध्यक्षतफलानि च पूर्णकुम्भाश्च रत्नाश्च मङ्गल्यानि च यानि
च तानि दृष्ट्वा प्रकुर्वीत अन्यानि शकुनानि च यवाष्टकानां सुदैर्घ्ये वितुम्बरं कुलं स्मृतं ११०१ तेनमानेन स्यात्‌ शयनादीन्प्रकल्पयेत्‌ श
नाङ्गुलातु महती शय्या स्याच्चक्रवर्तिनां ११०२ अष्टांशहीनमस्या दैर्घ्यं विस्तारं परिकीर्तितं आयामस्य त्र्यंशको भागः पादोच्छ्रायः सकुक्षिकं
११०३ सामन्तानां भवति सा षडूना तथैव च कुमाराणां च सा प्रोक्ता दशोना चैव मन्त्रिणां ११०४ त्रिषड्डोना बलेशानां द्विशोना च पुरोध
सां षडंशहीनमस्या दैर्घ्यं विस्तारं परिकीर्तितं ११०५ आयामस्य त्र्यंशको भागस्त्र्यंशहीनस्तथैव हि पादोच्छ्रायश्च कर्तव्यश्चतुस्त्रिद्व्यङ्गुलैः

वि०
प्र०
३४

क्रमात् ११०६ सर्वेषामेववर्णानांसार्द्धहस्तत्रयंभवेत् स्वकाशीत्यङ्गुलैश्चार्य्याशय्यादेवविनिर्मिता ११०७ असनेशेमहद्दोषपितृकम्बिन्दुर्मे
द्भवः शिशुहाचन्दनमयोधर्मायुर्यशोदायकः ११०८ शिंशिपावृक्षसम्भूतःसमृद्धिकृत्सनेमहान् पनसपद्मकपर्य्यङ्कोदीर्घमायुःश्रियंसु
तं वित्तञ्चकुविप्रभ्रान्तोशत्रुनाशन्तथैवच शालःकल्याणदःप्रोक्तःशाकेनरविनस्तथा ११०९ केवलञ्चन्दनेनैवनिर्मितंरत्नचित्रितं सु
वर्णगुप्तमध्यासनयङ्कम्पूज्यतेसुरैः अनेनैवसमायुक्ताशिंशिपातिन्दुकीनच शुभासनन्तथादेवदारुश्रीपर्णिनापिवा १११० शुभ
दौशाकशालौतुपरस्परयुतौहयष्ट नद्दन्मृथक्प्रशस्तौहिकदम्बकहरिद्रकौ ११११ सर्वकाष्ठेनरविनोत्तमःपरिकल्पितः आम्रेनवा
प्राणहरश्चासनोदोषदायकः १११२ अनेनसहितोद्दोषकरोतिधनसंक्षयं आम्रोदुम्बरवृक्षाणाञ्चन्दनस्यन्दनाशुभा १११३ फलिनान्तुवि
शेषेणाफलंशयनासनं गजदन्तान्सर्वेषांयेयोगेशुभफलाःस्मृताः १११३ प्रशस्तेनचदन्तेनकार्योलङ्कासनेनयोः दन्तस्यमूलपरिधीव्याय
तंमोत्तत्वकल्पयेत् १११४ शय्याफलकमूलेतुचिह्नञ्चासनकोणके न्यूनञ्चिरिचराणान्तुकिंचिकिञ्चिन्नप्रशस्यते १११५ श्रीवत्सवर्द्धमाने
ध्वजंछत्रञ्चचामरं छेदेदृष्टेनुद्यारोग्यम्विजयन्धनवृद्धिदं १११६ प्रहरणाभेजयोज्ञेयोनन्द्यावर्तेलभेन्महीं लोष्ठेतुलब्धपूर्वस्यदेश
स्याप्तिर्भविष्यति १११७ स्त्रीरूपेअर्थनाशःस्याद्भृङ्गराजेसुतस्यच लाभःकुंभेनिधिप्राप्तिर्योत्राविघ्नश्चदण्डके कृकलासभुजङ्गाभेदुर्भि
क्षंवानरेणच गृध्रोलूकश्येनकाकसदृशोमकरोमहान् १११९ पाशेवाथकवन्धेवामृत्युर्जनविपद्भवेत् रक्तस्तुतेवकृष्णोवश्यावेदुर्गन्धिवान्भवेत्
११२० शुक्लैःसमैःसुगन्धैश्चस्निग्धैश्छेदःशुभावहः अशुभानशुभायेचछेदासेशयनेशुभाः ११२१ ईशादियोसदक्षिण्याप्रशस्तमयवानथा

ग
३

अपसव्ये दिक्त्रये च भयम्भवति ध्रुतं ११२२ एकेनावा विंशरेशो वैवैकस्संपादनः शुभं द्वाभ्यां नतीयेनेवानं त्रिषतुःस्के प्रावन्धदौ ११२३ सु
खिरे वा विवर्णे वा ग्रन्थौ पादो शरे तथा। व्याधिः कुम्भे यवापादे ग्रन्थिर्वेदनरोगदो ११२४ कुम्भाग्रभागे जङ्घाया जङ्घारोगन्तथाभ
वेत् तस्याश्चाधोपदाधोवा द्रव्यनाशकरः परः ११२५ खुरदेशे यदा ग्रन्थिः खुराणाम्पीडनं भवेत् राशिशीर्षे त्रिभागसंस्थो पिनशुभभ
दः ११२६ निष्कुटञ्चाथ कोलाख्यं दुष्टिनेत्रञ्च वस्तकं कोलकम्बन्धुकञ्चैव संक्षेपः छिद्रकस्य तु ११२७ घटवत्सुखिरञ्चैव सङ्कुचस्त्वंच
निष्कुटं छिद्रन्निःपावनीलञ्च कोलं स्यन्नहुधैस्मृतं ११२८ विषमद्रुष्टिनयनञ्चैव वर्ण्यम मध्यदीर्घकं वामावर्त्तं च भिन्नं च यथावद्वस्तराभ
कं ११२९ कोलकद्रुष्णावर्णञ्च वन्धुकं पद्मवेद्विधा दार सवर्णछिद्रं च तथा पापञ्च कीर्त्तितं ११३० निष्कुटे द्रव्यनाशः स्यात् कोलाख्ये कुल
नाशनं शस्त्राद्भयं सूकरे च वस्तनाभङ्गदम्पदं ११३१ कालवन्धुकसंज्ञञ्च कीटैर्वेद्धनशोभनं सर्वग्रन्थियुतं यच्च दारुस्तर्वेत्र नोशुभे ११३२
एकद्रुमेणधान्यं स्याद्धस्त पविनिर्मितं धन्यंत्रिभिस्त्वपुत्राणां वृद्धिदम्परिकीर्त्तितं ११३३ अर्थंयशश्चतुर्भिश्च पञ्चभिः स्मृतं षद्
सप्तरचिते काष्टे कुलनाशो भवेद्ध्रुवं ११३४ शिरोमूलञ्च वृक्षाणा मयेपादाश्च कीर्त्तिताः अनारण्ये चन्दनेषु यतो मूलन्ततः शिरः ११३५
द्रुनिषेकम्मया विप्राः शयनासनलक्षणं भङ्गे च दोषाः कथिताः स्वामिना सहितेन च ११३६ पादभङ्गे मूलनाशं भ्रणौ धनसंक्षयः शीर्षे
तु मरणं विद्यात् पादे हा महान्भवेत् ११३७ घरटाकारं लिखेच्चक्रं विधिष्ण्यक्रमेण च शुद्धे शुभे दिने चैव वह्नत्वा तां निषिविम्य शेव ११३८
शयीत दक्षिणे गेहे सुखं तं शुभदं भवेत् सुखैकं दिक्षु चत्वारि त्रीणि च गुदकरयोः ११३९ एवच्चक्रं समालिख्य मवेशार्थं सहायुधैः अग्निना

शो मुखे सोक्तः उद्वासः पूर्वतो भवेत् दक्षिणे चार्थलाभश्च पश्चिमे श्रीप्रदो भवेत् ११४० उत्तरे कलहश्चैव गर्भे गर्भविनाशनं स्थिरता च गुदे कर्णे
लक्ष्मस्य प्रकीर्तिता ११४१ स्नातः शुचिर्निराहारो लङ्कारेण विभूषितः पुत्रदारसमायुक्तः सामात्यः सपुरोहितः गन्धपुष्पञ्च वस्त्रञ्च परिधा
य पुनर्नवं पुष्पमालान्वितङ्कार्यं रुचिरं चित्रचित्रितं प्राकारं वेष्टयेत्तत्र मालया परिशोभितं वस्त्रेणाच्छादितं मार्गं कृत्वा राजा सुखास
ने ११४३ निवेश्यायेत्तया राज्ञी निवेश्य विजितेन्द्रियः गीतोत्सवादिभिर्युक्तो गीतवाद्यादिसंयुतः ११४४ अग्रे सुपूर्णान्कलशान्विप्रान्वे
द विशारदान् गायकान् गणिकाश्चापि सुवासिन्यो विशेषतः ११४५ ध्वजैर्यात्रा दिशाकुम्भैर्द्वारमार्गेण भूपतिः वितानैस्तोरणैः पुष्पैः
पताकाभिर्विशेषतः ११४६ अलङ्कृत्य नवं गेहं देहलीं पूजयेत्ततः दिक्पालांश्च तथा क्षेत्रपालं ग्रामाधिदेवतान् ११४७ प्रणम्य विधि
वत्पूज्य द्वारमार्गे विशेद्गृहं पूजयेद्गणनाथञ्च मातृकाश्च विशेषतः वसोर्धारां समानयित्वा ग्रहांश्चैव तु पूजयेत् वास्तुनाथञ्च संपूज्य
ब्राह्मणान्पूजयेत्ततः ११४८ दक्षिणाञ्च ततो दद्याद्विद्वद्भ्यो विमत्सरितः गोदानं भूमिदानञ्च कारयेच्च यथाविधि ११४९ सुरोद्दि
तञ्च दैवज्ञं स्थापतीन्परितोष्य च दीनान्धकृपणेभ्यश्च दद्याद्दानञ्च भोजनं ११५० लिङ्गिनश्च विशेषेण बन्धुवर्गञ्च पूजयेत् दान
मानैश्च तान्सर्वान्परितोष्य यथाविधि ११५१ भोजयेद्बन्धुवर्गांश्च स्वयं भुंजीत वाग्यतः राजा चान्तःपुरे वध्वा स्त्रीजनैश्च समन्वितः॥
११५२ भोजयेत्कुलिनश्चान्तःपुरस्थाः स्वजनान्ततः विहरेच्च सुखं राजा स्वावासे भार्यया न्वितः ११५३ इति श्रीवास्तुशास्त्रे गृहप्रवेश
विधिप्रकरणे दशमोऽध्यायः १०॥ अथातः शृणु विप्रेन्द्र दुर्गाणां करणं तथा येन विज्ञानमात्रेण अवलः सबलो भवेत् ११५४ य

स्वाश्रयवलादेवराज्यङ्कुर्वन्तिभूतले विग्रहञ्चैवराज्ञानुसामान्यैःशत्रुभिस्सह ११५५ विषमन्दुर्गमङ्घोरञ्चक्रंभीहंभयावहं कपिशीर्ष
समञ्चैवौह्यदलकमन्दिरं ११५६ स्थानन्विचिन्त्यविषमन्तत्रदुर्गम्प्रकल्पयेत् प्रथमंमृन्मयम्प्रोक्तञ्जलकोटन्द्वितीयकं ११५७ तृ
तीयङ्ग्रामकोटञ्चचतुर्थङ्गिरिगह्वरं पञ्चमम्पर्वताग्रेहंषष्टङ्कोटञ्चडामरं ११५८ सप्तमञ्चक्रभूमिस्थंविषमाख्यन्तथाष्टमं च
तुरस्रंचतुर्द्वारम्वर्तुलञ्चतथैवच ११५९ दीर्घद्वारन्द्वयाकारन्त्रिकोणमेकमार्गकं वृत्तदीर्घञ्चतुर्दारमर्द्धचन्द्रन्तथैवच ११६०
गोस्तनञ्चचतुर्द्वारन्त्वानुषम्मार्गमेकराटकं पद्मपत्रनिभञ्चैवछत्राकारन्तथैवच ११६२ दशप्रकाराणिमयाप्रोक्तानिद्विजपुङ्गव मृ
न्मयेखननाड्डीतिंजलस्थेमोक्षवन्धनात् ११६३ ग्रामदुर्गेपिदाहाञ्चप्रवेशोगह्वरस्यच पर्वतेस्थानभेदाच्चडामरेभूवलाद्द्वयं
११६४ वक्राख्येकवियोगाञ्चविषमेस्थापिनानथा वलावलाद्यमपदम्पुनरन्यन्प्रवच्म्यहं ११६५ ज्ञातिदुर्गङ्कालवर्णञ्चक्रावर्त
चडिवरं नालवर्त्तञ्चपद्माक्षंपक्षभेदञ्चसर्वतः ११६६ कारयेत्प्रथमंराजापश्चाद्दुर्गंसमाचरेत् प्राकारेविन्यसेदादौवाह्यस्थान्य
जयेत्ततः ११६७ परिखाञ्चततष्कृत्वातन्मध्येचमतःपुनः सव्यापसव्यमार्गेणमार्गन्तत्रप्रकल्पयेत् ११६८ गृहानिवाह्यसंस्थानि
कोणेकोणेषुविन्यसेत् कोणस्थान्वाह्यतोगेहान्विषमान्कारयेत्ततः ११६९ प्रतोलिम्पत्रकालाख्यंपरिखाकालरूपिणीं रणमत्कु
त्वायेयाञ्छकलीमंत्रमंडितं ११७० सुघालैःसुदृढैःप्रासैर्यन्त्रैःखड्गैर्धनुर्द्धरैः संयुतंसुभटैःशूरैःसंयुतानिचकारयेत् ११७१ तन्मोस्योत्र
पुरानोहान्कोणेकोणेप्रदापयेत् तद्वाह्येपरिखाकाराकालरूपासुविस्तरा ११७२ समप्रदेशेमध्येतुमहागेहानिविन्यसेत् तत्रसंपू

वि० प्र० ३६

जयेद्वास्तुकोटपालंस्तथैवच ११७३ क्षेत्रपालञ्चविधिवत्पूर्ववत्संप्रपूजयेत् एतद्विधानंसर्वेषुदुर्गेषुचविधानतः ११७४ कारयेद्विषमं
स्थानेपर्वतेचविशेषतः बाह्येचपरिखाकार्याप्राकारंतस्यमध्यतः ११७५ तन्मध्येचपुनर्भित्तिंभित्तिमध्येगृहान्तपि गृहाणामम-
ध्यभागेतुपरिखान्नैवकारयेत् ११७६ पूर्ववत्कोणभागेषुगृहान्विन्यस्यपूर्ववत् त्रिपञ्चसप्तप्राकारान्कारयेन्मध्यमध्यतः ११७७
तन्मध्येतुमहापद्मंपूर्ववत्परिकल्पयेत् तत्रैवस्थापयेद्वास्तुकोटपालंस्तथैवच ११७८ दीर्घेदीर्घगृहान्कुर्याद्वृत्तेवृत्तांस्त्रिकोणके
त्रिकोणान्कारयेद्धीमान्स्ववृध्यांवातथैवच ११७९ धनुषेधनुषाकारान्गोस्तनेगोस्तनाकृतिं त्रिकोणेछत्रखण्डेवाद्वारम्पातालतोभ
वेत् ११८० प्राकारस्योर्धनुद्धारीसर्वत्रअवलोकने तथाभित्तिःप्रकर्तव्यासुदृढाविस्तराशुभाः ११८१ एवम्मयाविनिर्दिष्टान्कोटान्क
रोतुबुद्धिमान् कोठस्थान्बाह्यभागस्थान्यःसर्वानवलोकते नाटकपुराणिसर्वाणिकारयेत्स्थपतिःक्रमात् अथातःसंप्रवक्ष्यामिय
दुक्तम्ब्रह्मयामले ११८३ यत्राकोटस्यनक्षत्रस्वामिकृत्क्षेत्रतथैवच गोचराष्टकभेदेनलंभानांभेदनेनतथा ११८४ पापाक्रान्तेमध्यकोटे
जन्मर्क्षेग्रहदूषिते वज्राग्न्यादिदोषेचतथाभूकम्पदूषिते ११८५ कोणभेरादुर्णायुक्तेग्रहणोत्पातदूषिते तत्रशान्तिःप्रकर्तव्या
यथावद्विधिनोदिताः ११८६ तत्पुरेमण्डपंकुर्यात्पताकाभिरलङ्कृतं अष्टकुंभान्तकुर्यात्सर्वौषधिभिरन्वितान् ११८७ सर्वबीजैः
पञ्चरत्नैस्तीर्थतोयैश्चपूरितान् भूमिञ्चावाहयेत्पूर्वंद्वितीयेनागनायकं ११८८ तृतीयेकोटपालञ्चस्वामिनञ्चचतुर्थकं पञ्चमेवरुण
ञ्चैवषष्ठेमदनंतथैवच ११८९ सप्तमेचण्डिकान्देवीम्मातृभिःसप्तभिर्युतां अष्टमेसुरनाथञ्चतत्तन्मन्त्रैश्चपूजयेत् ११९० वास्तुपूजा

राम: ३६

न् १२०४ खादिरस्यचकीलन्तुद्वादशाङ्गुलमानतः मृत्युंजयेनमन्त्रेणअभिमंत्र्यसहस्त्रधा १२०५ स्थिरलग्नेस्थिरांशेचसुलग्नेसुदिनेन
नः रोपयेद्दुर्गमध्येतुततःसिद्धिर्भविष्यति १२०६ सर्वदासुखभागीचकोटपोभवतिध्रुवं उष्ट्रमंत्रः ॐह्रींउष्ट्रविकटदंष्ट्राननेचुफट् ॥
१२०७ उष्ट्रमंत्रंदशसहस्त्राणिजपित्वा घृतमधुनापुष्पैः सहस्त्रमेकंजपेत् ततःसिद्धोभवति यमश्लोकंद्वात्रिंशाक्षरंद्वात्रिंशत्सहस्त्र
णिजपेत् ततःसिद्धोभवति तथापूर्वविधिनाशतशतानिहोमयेत् ततःसिद्धोभवति ततस्सकलंकर्मकरोति॥ द्वादशारंलिखेच्चक्रं
रत्नत्रयविभूषितं अष्टमन्त्रअष्टतदात्येयमश्लोकोचमध्यतः १२११ वज्रार्गलविधानन्तुकर्तव्यन्दुर्गलक्षणे भजनेयमराजाख्यमि
त्युक्तंब्रह्मयामले १२१२ मृत्युंजयमंत्रः ॐजूंसः॥ इतिवास्तुशास्त्रेकोटवास्तौएकादशोऽध्यायः ११ ॥ अतःपरंप्रवक्ष्या
मिशल्यज्ञानविधिम्पुनः येनविज्ञानमात्रेणगृहेशःसुखमाप्नुयात् १२१३ गृहारंभेचवक्रंडूतिःस्वाङ्गं यत्रप्रवर्तते शल्यमासादयेत
त्रप्रासादेभवनेतथा १२१४ सशल्यंभयदंयस्मादल्पसिद्धिप्रदायकं कारयित्वानमस्कारंयजमानंपरोक्षयेत् १२१५ यदङ्गंसंस्पृ
शेत्कर्त्तामूलकंशल्यमुद्धरेत् अष्टतालादधस्तस्मिनत्रशल्यंनसंशयः १२१६ नासिकास्पर्शनेकर्तुर्वास्तोःशल्यनदल्पकं स्थितं
विनिश्चितंब्रूयात्तल्लक्षणमथोच्यते १२१७ शिरसःस्पर्शनेवास्तोःसार्द्धहस्तादधःस्थितं मौक्तिकन्तुकरत्रेणमुखस्पर्शेतिदेहिनः
१२१८ वाजिदंतंमहाशल्यमुद्धरेद्वास्तुतत्त्ववित् करःस्पर्शेकरेवास्तोःषद्धाङ्गेचकरादधः १२१९ अथापरमपिज्ञानङ्कथयामिसमास
तः षड्गुणीकृतसूत्रेणशोधयेद्धरणीतले १२२० सुधृतेसमयेतस्मिन्दृतेङ्कनापिलङ्घितं तदस्थितत्रजानीयात्तत्कस्यप्रमाणं

| | | |
|---|---|---|
| ई॰ | पू॰ | आ॰ |
| उ॰ | म॰ | द॰ |
| वा॰ | प॰ | नै॰ |

तः १२२१ यावत्कोष्ठे स्थिते यस्माद्दिशं शल्यं समादिशेत् तस्यामेव नदस्थीनि सप्तत्यङ्गुलमानतः १२२२ सूत्रितेसमयेयत्र आसनोपरि स्थि
स्थितः नदस्थितत्र जानीयात्स्त्रिनौ क्षणेन संशयः १२२३ नवकोष्ठीकृते भूमिभागे प्राच्यादितो लिखेत् अक
चटतपयशान्सद्वयान्क्रमाद्वर्णानिमानि च १२२४ प्रारंभस्याद्यदि प्राच्यां नरशल्यं तदा भवेत् सार्द्धहस्तप्रमा
णेन तत्स्यान्मानुष्यमृत्यवे १२२५ आग्नेय्यां दिशि चेत्कः प्रश्ने खरशल्यं करद्वयोः राजदंडो भवेत्तस्मिन्भयं चैव प्रवर्त्तते
१२२६ याम्यां दिशि टः प्रश्ने नरशल्यमधो भवेत् तद्गृहस्वामिनो मृत्युं कुर्यात्कटिसंस्थितं १२२७ नैरृत्यां दिशि
तः प्रश्ने सार्द्धहस्तादधस्तले शुनोऽस्थि जायते तत्र डिंभानां जनयेन्मृतिं १२२८ प्रश्ने च पश्चिमायां तु शिशुशल्यं प्रजायते सार्द्धहस्तेन प्र
वासाय सदनं स्वामिनः पुनः १२२९ वायव्यां दिशि तु प्रश्ने नराणां स्याच्चतुष्करे शल्यं स मुकरेऽङ्गारान् करोति मित्रनाशनं १२३० उत्त
रस्यां दिशि प्रश्ने गर्द्भास्थि न संशयः सार्द्धहस्तचतुष्के च पशुनाशाय तद्भवेत् १२३१ ईशानदिश्यपः प्रश्ने गोशल्यं सार्द्धहस्ततः तच्च
गोधननाशाय जायते गृहमेधिनः १२३२ मध्यकोष्ठे च यः प्रश्नो वक्षोमात्रादधस्तदा केशाकपालभस्मास्थि भस्मलोहं च मृत्यवे
१२३३ मंत्रश्च ॐ ह्रीं कूष्मांडिके मातिर्मम हृदये कथय कथय ह्रीं स्वाहा एकविंशतिवारमनेन मंत्रेणाभिमंत्र्य प्रश्नमानयेत् अत्रादि
शि: सूर्योदयाद्गणनीयाः जलान्तं प्रस्तरान्तं वा पुरुषान्तमथापि वा १२३४ क्षेत्रं संशोध्य चोद्धृत्य शल्यं सदनमारभेत् शल्यानेकविधा
नि काष्ठाधातुकाष्ठास्थिसंभवाः १२३५ नाभ्नीरोहप्रकर्तव्यो गृहारंभादिकोजनम यदानज्ञायते शल्यं गृहारंभणकर्मणि १२३६ फलपाके

वि॰ नशल्यंतज्ज्ञात्वयद्भमेवंद्विभिः सशल्येवासुसदनेपूर्वदुःस्वप्नदर्शनं १२३७ हानिर्वारोगमतुलन्धननाशस्तथैवच अन्यानिवास्तुशा
प्र॰ ल्यानिकथयामिसमासतः १२३८ सप्ताहाद्वासितेरात्रौगौर्वागोष्टेथवन्ध्यको रोदनेवाहणोभ्योवाभ्रान्तोवागृहमूर्द्धनि १२३९ वन्ध्योवा
३८ प्रविशेयस्यनिर्विशङ्कोथवामृगः श्येनोवाथकपोतोवाव्याघ्रोगोमायुवातथा १२४० गृध्रोवाथयवाहेष्णासर्पोवाथशुकोपिवा नरः
स्थोनिगृहीतश्चचाण्डुलोवाथकारणात् १२४१ वज्रेणदूषितंयच्चयच्चवानाग्निदूषितं यक्षोवाराक्षसोवापिपिशाचोवातथैवच ॥
१२४२ काकोवाताडितेरात्रौभूतोवापिगृहेथवा कलहश्चदिवारात्रौयोषितांयुद्धमेवच १२४३ तत्रापिशल्यंजानीयाद्येवान्यंगृ
हदोषकाः काष्ठेपिशल्यंजानीयाद्दारूणाम्व्यत्ययेतथा १२४४ गोशल्येवान्यशल्येवाशल्योद्धारन्ततश्चरेत् वंशादीनाञ्चयच्छल्यं
यच्छल्यन्द्वारमार्गतः १२४५ वाह्यमेवधस्ययच्छल्यंतद्दोषञ्चविनाशयेत् तस्मादनेकशल्यानांज्ञानन्नास्तिनदानरैः १२४६ अवश्यमे
वकर्त्तव्यंशल्योद्धारंद्विजैश्शुभैः वास्तुपूजाचविधिवत्कार्येपूर्वकेदिने १२४७ सुदिनेशुभनक्षत्रेचन्द्रताराबलान्विते शुद्धेकालेप्र
कर्त्तव्यंशल्योद्धारंद्विजोत्तमैः १२४८ शिलाङ्कार्यासमांश्लक्ष्णांहस्तमात्रांदृढांशुभां चतुरस्रांत्रिभागेनपङ्क्तिकाभिर्विनिर्मितां १२४९
नावन्नमाणामाधारशिलाङ्कृत्वाविधानवित् नन्दायाम्मस्तकस्थोत्तम्भद्रायांदक्षिणङ्करं १२५० रिक्तावामकरेप्रोक्ताजयायांचरणौत
था नाभिदेशेतथापूर्णासर्वाङ्गेवास्तुपूरुषां १२५१ सर्वदेवमयम्पुंसांसर्वेषांशोभनंभवेत् तस्मान्मध्येप्रदेशेतुशिलेकांस्थापयेद्बुधः १२५१ यमः
गृहमध्येनाभिमात्रङ्कृत्वागर्त्तसमंततः शिलामध्येलिखेद्यंत्रंस्वस्तिकाख्यंसुशोभनं १२५३ खनित्वास्ययतिस्तस्मिन्विभागङ्कारयेद्बुधः ३८

साद्वीथीचनथागृहस्य आग्नेयवायव्ययोगृहं त्रिकोणवेधक्रमेण सुतार्थिनातत्परिवर्जनीयाः १२४२ आग्नेयदक्षिणे वेधमर्ध
चौद्विगुणभूमिषु नैर्ऋत्ये त्वपरयं यावदीशाने त्रिगुणं कुर्यात् १२४३ एतन्नृपाणां कुर्यान्नन्यवर्णानामनुपूर्वतः पूर्वोक्तादिक्रमेणैव नाह्यं
णादिक्रमेण च १२४४ पश्चात्समुद्रत्वाशीवैविधेयं द्विजमन्दिरात् तथा सौम्यजनो नीचो दण्डात्सप्ततिसम्मितात् १२४४ जलाशयस्य
स्थितो यु वैश्यानां दण्डान्दशैव तु यान्यो वा स्यादुत्तरे दिग्दण्डादिविंशतिसम्मितात् १२४५ शूद्राणां तु समासेन कथयामि पुरा गृहं दशद
ण्डानि पर्यन्तं प्राग्वै पूर्वे नीचकं १२४६ उत्तरे द्वादशा दण्डा नीचस्थान स्थितस्य तु पश्चिमे त्रिंशद्दण्डानि यदि वै दुष्टभूमिषु १२४७ दक्षि
णे पञ्चदण्डानि गृहानि परिवर्जयेत् वैपरीत्ये पादहीनं दण्डाग्रं त्यज्य बुद्धिमान् १२४८ पञ्चदण्डानि पर्यन्तमपीडनेपुरवासिनां
समभूमिषु सन्त्याज्यो वेधये द्विजपुङ्गवाः १२४९ दक्षिणेनो दिग्विषये भवनं वेर्ये स्याद्योगना शोधाः सुतमरणं प्रेष्यत्वे भवति सदा तत्र वा
सिनां तुसां गृहं कुर्याद्वस्वनया चतुर्थो भावो भवेद्दिग्विषये स्थितो वा अर्द्धं च नीचे यमदिक्स्थितस्य गेहस्य चाग्नेयभवे च दोषः १२५० अभाव
सोऽथवा कन्या पितृहायोगमसुतः तथा याम्यगृहं त्याज्यं नरेण भूतिमिच्छता १२५१ रक्तकंपीयलंस्त्रोष्ठीपिङ्गाक्षीकृष्णतालुका भर्तारंह
निमाक्षिप्रं तथा याम्यगृहान्तुरं १२५२ आलस्येन यथा देहं कुपुत्रेण यथा कुलं दारिद्र्येण यथा जन्म तथा याम्यगृहान्तुरं १२५२ उदीच्यां विन्य
से हो दीपश्चायायाम्यं तु विन्यसेत् तद्वद्व्यवधानेन तपुत्रदाराद्विनाशनं १२५४ ईशाने विन्यसेच्छागं नाकागः सिंहमस्तकः आग्नेयस्य गृहस्य
कन्याय व्यसंश्रयेन तथा १२५५ काकभक्ष्यं वा दीपश्चाग्नेर्नैर्ऋत्यदिक्स्थितं छागसस्तदीशाने सिंहनाम्नानुनैऋते १२५६ सिंहोभक्ष्यतेषेवन

था आग्नेय्यां दिक्रमेणैव क्षीरिणोथ कदम्बकाः १२७६ करंटका कदलीलभ्याः वेधने वफलद्रुमाः विवरम्पूर्वदिग्भागे दक्षिणे मरमन्दिरं प
श्चिमेपीक्षरन्नोयं रवातन्तु नरसंज्ञके पूर्वेणफलिनो वृक्षाः हास्यक्षयकदक्षिणं १२७८ पश्चिमे जलजा वृक्षाः रिपुतो भयदायकाः क्षीरि
णस्वार्थनाशाय फलिनो दोषदाः स्मृताः इत्येवं दानिपर्यन्तमीशानो पुरवासिनां कलहंश्चादिशेद्रोगं वव्याधिशोकन्धनक्षतिः १२८०
वीथ्यन्तरेण दोषः स्यान्न दोषम्मार्गमध्यगं विदिक्षु नैव वेधन्तु नवेधन्दूरतः सदा १२८१ नीचस्थाने भवेद्वेधः कोणवेधस्तथैव च भित्यंत
रेन दोषः स्यान्न दोषश्चैत्यमध्यमं १२८२ न दोषः पुष्करवनस्यान्न दोषो वाणघातके न दोषस्तु विकोणे तु न दोषं फलवृक्षके १२८३ न दो
षश्चैव जाते तु न दोषं भग्नमन्दिरे चतुष्पथान्तेन भवेद्वेधो जीर्णगृहान्तरे १२८४ अत्युच्चमतिनीचञ्च मध्ये विषमलंघनं अन्नजलादि
पतने वेधदोषो न विद्यते १२८५ अनारोपिता वृक्षाः विल्वदाडिमकेशराः न तत्र वेधदोषः स्यात्सत्यम्मलशुवाचकुं १२८६ षड्वर्षैस्त्रिय
ते स्वामी गतश्रीः नवमे भवेत् चतुर्थे पुत्रनाशः स्यात्सर्वनाशस्तथाष्टमे १२८७ पक्षेण मासेन अनुत्रयेण सम्वत्सरेणापि फलं विधत्ते शुभा
शुभं क्षेममिदं बुधैस्तु नातः परं तत्र विचारमस्ति १२८८ मानङ्गोदक्षिणे भागे पूर्वे पश्चात्तयोस्तरे सिंहो विधत्ते मरणं पुत्राणां दोषदम्महत्॥
१२८९ पूर्वे वृषन्तथाग्नेये ध्वजं दोषकरम्महत् इति कण्टीरवे गेहे याम्यपश्चिमदिक्स्थितौ १२९० पूर्वे नरेश्वनो ह्याणाम्महापीडाकरौ
मतौ जवीरैः पुष्पवृक्षैश्च पनसैर्दाडिमैस्तथा १२९१ जातीभिर्मल्लिकाभिश्च शतपत्रैश्च केसरैः नालिकेरैश्च पुष्पैश्च कर्णिकारैश्च किंशुकैः
१२९२ वेष्टितं भवनञ्चूर्णं सर्वसौख्यप्रदायकं आदौ वृक्षाणि विन्यस्य पश्चाद्गेहाणि विन्यसेत् १२९३ अन्यथा यदि कुर्यात्तु नगृहन्नैव

वि॰
प॰
४३

शोभनं नगरस्विन्यसेद्वावीथ्यादेशाणि विन्यासेन १३९४ अन्यथा परिकुर्वाणस्तदानस्तुभमादिशेत् पीताथपूर्वे कपिलातुनाग्नेय्यामेवरक्त
ज्वानित्र्यातैर्नैऋत्यामा सुक्ष्मपती च्याहरितायवायोश्वेतायसौम्येधवलाचईश्ये १३९५ ईशानपूर्वयोर्मध्ये श्वेतापश्चिमनैऋते तयोर्मध्ये
रक्तवर्णा पताकापरिकीर्तिता १३९६ सर्ववर्णा तथा मध्ये पताकां किरणीयुता वक्ष्यमाणाकर्तव्या स्तंभंवा कुम्भमाराकं १३९७ पद्द्वारमार्गे पूर्वेतु
ध्वजः षोडशहस्तकः स्तम्भोस्य विधिवत्स्थाप्यः सप्तएटाभरणीकृतः १३९८ पुष्पमालान्वितः स्थाप्यो द्वारमार्गेयदक्षिणे इति मोक्तम्वास्तु
शास्त्रम्पूर्वंहुङ्गोयधीमते १३९९ गर्गात्पराशरः प्राप्तस्तस्मान्नाप्तबृहद्रथः बृहद्रथाद्विश्वकर्मा प्राप्तवान्वास्तुशास्त्रकं १४०० सविश्वक
र्माजगतो हितायकथयत्पुनः वासुदेवादिषुपुनर्भूलोके भक्तिनो ब्रवीत् १४०१ इदम्पवित्रं परमं रहस्यं यः पठेन्नरः तस्माद्वितथ्या वाणीस
त्यं सत्यं वदाम्यहं १४०२ अयसविमलविप्रो विश्वकर्मा महात्मा सकलगुणवरिष्ठः सर्वशास्त्रार्थवेत्ता सकलसुरगणानां सूत्रधारः कृता
त्माभवननिवसनानां सच्चकारास्त्रमेतत्सकार १४०३॥ इति श्रीसौत्र विश्वकर्मप्रकाशे विश्वकर्मणोक्ते वास्तुशास्त्रे त्रयोदशोऽध्यायः १३ ॥०॥

रा॰
४३

